॥ श्रीः ॥

# ॥ श्रीशारदाचतुःषष्टिः ॥

-❀-

अद्राक्षमव्याजकृपामपारां
श्रीशारदाम्बाभिधया लसन्तीम् ।
श्रीशृङ्गपुर्यामधिचक्रमध्य-
मितः परं किं करणीयमस्ति ॥ १ ॥

अद्राक्षमम्भोजभवस्य पुण्य-
परम्परामाश्रितदिव्यमूर्तिम् ।
मालासुधाकुम्भलसत्कराब्जा-
मितः परं किं करणीयमस्ति ॥ २ ॥

अद्राक्षमानन्दपयोधिराका-
सुधाकराणामिव रम्यपङ्क्तिम् ।
विबोधमुद्रावरपुस्तकाढ्या-
मितः परं किं करणीयमस्ति ॥ ३ ॥

अद्राक्षमुत्तुङ्गतरङ्गतुङ्गा-
तटान्तराजद्वरमन्दिरस्थाम् ।
शशाङ्कबालोज्ज्वलदिव्यमौलि-
मितः परं किं करणीयमस्ति ॥ ४ ॥

अद्राक्षमर्धेन्दुसमानफालां
लावण्यसर्वस्वपयोधिवेलाम् ।
कीलालसंभूतसमुत्थलोला-
मितः परं किं करणीयमस्ति ॥ ५ ॥

अद्राक्षमिन्दीवरतुल्यनेत्रां
भ्रूवल्लिकानिर्जितकामचापाम् ।
तुङ्गानदीतीरविहारशीला-
मितः परं किं करणीयमस्ति ॥ ६ ॥

अद्राक्षमक्ष्णोर्जनिमर्थयुक्तां
प्रकुर्वतीं स्वाङ्घ्रिनिरीक्षणेन ।
पयःप्रभूतप्रभवस्य जाया-
मितः परं किं करणीयमस्ति ॥ ७ ॥

अद्राक्षमिक्षूदतरङ्गतुल्यां
वाचं नतानां ददतीं जवेन ।
लोकेशवामाङ्कमहद्विभूषा-
मितः परं किं करणीयमस्ति ॥ ८ ॥

अद्राक्षमास्येन्दुविलोकनेन
विकासयन्तीं हृदयाम्बुजानि ।
प्रणम्रपङ्क्तेर्वचसां सवित्री-
मितः परं किं करणीयमस्ति ॥ ९ ॥

अद्राक्षमज्ञानतमःप्रचण्ड-
मार्तण्डषण्डीकृतपादसेवाम् ।
अपारसच्चित्सुखरूपदेहा-
मितः परं किं करणीयमस्ति ॥ १० ॥

अद्राक्षमक्षीणदयारसार्द्र-
कटाक्षसंरक्षितलोकजालाम् ।
अजान्तरङ्गाम्बुजभानुरूपा-
मितः परं किं करणीयमस्ति ॥ ११ ॥

अद्राक्षमद्याहमशेषलोक-
प्रवृत्तिसाक्ष्यात्मतया विभान्तीम्।
गुप्त्यै प्रपञ्चस्य कृतावतारा-
मितः परं किं करणीयमस्ति ॥ १२ ॥

अद्राक्षमत्यन्तविरक्तिभक्ति-
श्रद्धाप्रमुख्यैः सुगुणैः सुलभ्याम्।
सुदुर्लभां तद्गुणवर्जिताना-
मितः परं किं करणीयमस्ति ॥ १३ ॥

अद्राक्षमम्भोजभवाब्जनेत्र-
गिरीशमुख्यैः परिपूज्यमानाम्।
वीणालसत्पाणिसरोजमध्यां-
मितः परं किं करणीयमस्ति ॥ १४ ॥

अद्राक्षमच्छच्छविनिर्जितेन्दु-
नीहारहारावलिदुग्धसिन्धुम्।
सगर्भयन्तीमगजासनाथ-
मितः परं किं करणीयमस्ति ॥ १५ ॥

अद्राक्षमाद्यैर्वचसां समूहै-
रभिष्टुतां देवमुनीन्द्रसङ्घैः ।
अम्भोजमच्छं शुकमादधाना-
मितः परं किं करणीयमस्ति ॥ १६ ॥

अद्राक्षमाद्यन्तविहीनशुद्ध-
बुद्धस्वभावं परमप्रमेयम् ।
विबोधयन्तीं कृपया प्रणम्रा-
नितः परं किं करणीयमस्ति ॥ १७ ॥

अद्राक्षमङ्कावहमङ्कवास-
मालोच्य वासं प्रविहाय तत्र ।
चतुर्मुखास्याम्बुजवाससक्ता-
मितः परं किं करणीयमस्ति ॥ १८ ॥

अद्राक्षमीशानरमेशपद्म-
भवादिरूपेण जगत्प्रवृत्तिम् ।
प्रकुर्वतीं शृङ्गमहीधरस्था-
मितः परं किं करणीयमस्ति ॥ १९ ॥

अद्राक्षमाम्नायशिरोवचांसि
हृदाप्यलभ्यां जगदुर्हि यां ताम् ।
विचित्रमस्याः करुणाविशेषा-
दितः परं किं करणीयमस्ति ॥ २० ॥

अद्राक्षमायासविहीनसेवा-
लवैरपि प्रीतहृदम्बुजाताम् ।
अशेषकल्याणगुणाभिरामा-
मितः परं किं करणीयमस्ति ॥ २१ ॥

अद्राक्षमाकण्ठनतानुकम्पा-
माक्षिप्रभानिर्जितमीनगर्वाम् ।
वाङ्माधुरीनिर्जितकोकिलौका-
मितः परं किं करणीयमस्ति ॥ २२ ॥

अद्राक्षमैश्वर्यमपारमाशु
संप्रापयन्तीं पदनम्रलोकान् ।
दन्तच्छदाधःकृतपक्वबिम्बा-
मितः परं किं करणीयमस्ति ॥ २३ ॥

अद्राक्षमानम्रजनानुताप-
वाराशिसंशोषणबाडवाग्निम् ।
तुङ्गानदीखेलनलोलचित्ता-
मितः परं किं करणीयमस्ति ॥ २४ ॥

अद्राक्षमाधारसरोरुहस्थां
पञ्चाननामस्थिकृतप्रतिष्ठाम् ।
मुद्गादनासक्तमनाऽम्बुजाता-
मितः परं किं करणीयमस्ति ॥ २५ ॥

अद्राक्षमष्टाङ्गहठादियोग-
निबद्धभावैरनुचिन्त्यमानाम् ।
कष्टारिषड्वर्गविभेददक्षा-
मितः परं किं करणीयमस्ति ॥ २६ ॥

अद्राक्षमर्कायुतभासमाना-
मनाहताख्ये हृदयाब्जमध्ये ।
फालेऽहिशत्रोर्धनुषः सवर्णा-
मितः परं किं करणीयमस्ति ॥ २७ ॥

अद्राक्षमिन्दोः सदृशीं शिरस्थ-
सहस्रपत्रे कमले मनोज्ञे ।
त्रिकोणमध्ये वरदीपिकाभा-
मितः परं किं करणीयमस्ति ॥ २८ ॥

अद्राक्षमम्बाङ्घ्रिसरोजयुग्म-
मवोचमप्यम्ब तवाभिधानम् ।
अश्रौषमंहोहरणं चरित्र-
मितः परं किं करणीयमस्ति ॥ २९ ॥

अद्राक्षमम्भोदतमःसमूह-
नीकाशकेशव्रजशोभमानाम् ।
कण्ठप्रभानिर्जितकम्बुगर्वा-
मितः परं किं करणीयमस्ति ॥ ३० ॥

अद्राक्षमव्याजदयासमुद्रै-
र्नृसिंहभारत्यभिधैर्यतीन्द्रैः ।
मोदाच्चिरं पूजितपादपद्मा-
मितः परं किं करणीयमस्ति ॥ ३१ ॥

अद्राक्षमीशानपरावतार-
श्रीशङ्करार्यैर्वरचक्रराजे ।
प्रतिष्ठितां सर्वजगत्सवित्री-
मितः परं किं करणीयमस्ति ॥ ३२ ॥

अद्राक्षमत्यन्तविरक्तिमाशु
विश्राणयन्तीं विषयेषु सुस्थाम् ।
शमादिषट्कं च विनम्रपङ्क्ते-
रितः परं किं करणीयमस्ति ॥ ३३ ॥

अद्राक्षमात्मैक्यविबोधनेन
संसारवाराकरमध्यमग्नान् ।
उत्तारयन्तीं करुणाकटाक्षै-
रितः परं किं करणीयमस्ति ॥ ३४ ॥

अद्राक्षमश्वस्तनानित्यवस्तु-
विवेकमत्यन्तमुमुक्षुतां च ।
संपादयन्तीं पदसंनताना-
मितः परं किं करणीयमस्ति ॥ ३५ ॥

अद्राक्षमाकाशनभस्वदग्नि-
जलादिरूपाणि जगन्ति सृष्ट्वा ।
प्रविश्य तेषु प्रविभासमाना-
मितः परं किं करणीयमस्ति ॥ ३६ ॥

अद्राक्षमूरीकृतपारहंस्यै-
र्दूरीकृताज्ञप्रभवप्रसङ्गैः ।
विचार्यमाणां श्रुतिशीर्षवाग्भि-
रितः परं किं करणीयमस्ति ॥ ३७ ॥

अद्राक्षमेनां हृदि मौनिवर्यै-
र्विशोषयद्भिर्विषयप्रवाहान् ।
साक्षात्कृतां पङ्कजजातकान्ता-
मितः परं किं करणीयमस्ति ॥ ३८ ॥

अद्राक्षमेतत्परिदृश्यमानं
यद्दर्शनान्नीरसमेव विश्वम् ।
तां सच्चिदानन्दघनस्वरूपा-
मितः परं किं करणीयमस्ति ॥ ३९ ॥

अद्राक्षमापूर्णकलङ्कशून्य-
शीतांशुनीकाशमुखाम्बुजाताम् ।
कंजातसंजातमनोहरन्ती-
मितः परं किं करणीयमस्ति ॥ ४० ॥

अद्राक्षमाकर्णविशालनेत्रां
रम्भासमानोरुयुगाभिरामाम् ।
नागेन्द्रकुम्भप्रतिमस्तनाढ्या-
मितः परं किं करणीयमस्ति ॥ ४१ ॥

अद्राक्षमेनां जडजातजातो-
ऽप्यनेकनानाविधविश्वकर्ता ।
यत्पाणिपद्मग्रहणादभूत्ता-
मितः परं किं करणीयमस्ति ॥ ४२ ॥

अद्राक्षमेनां कलिकल्मषघ्नीं
यत्पादपद्मं दिननाथतुल्यम् ।
स्वध्यातृहृद्ध्वान्तनिवारणात्ता-
मितः परं किं करणीयमस्ति ॥ ४३ ॥

अद्राक्षमच्छाच्छपयोजसंस्थां
शरन्निशानाथसदृक्षचेलाम् ।
नम्रालिजिह्वाग्रकृतप्रनृत्ता-
मितः परं किं करणीयमस्ति ॥ ४४ ॥

अद्राक्षमव्याहतशक्तिदात्रीं
विनिग्रहानुग्रहयोः क्षणेन ।
अपीन्द्रलोकादिसमस्तसृष्ट्या-
मितः परं किं करणीयमस्ति ॥ ४५ ॥

अद्राक्षमेनां महिषासुरस्य
निशुम्भशुम्भासुरयोश्च हन्त्रीम् ।
अस्वप्नलोकावनबद्धदीक्षा-
मितः परं किं करणीयमस्ति ॥ ४६ ॥

अद्राक्षमालोक्य जनिं समृत्युं
जातस्य हीत्यादि नयेन वत्रे ।
अजं पतिं या चतुरामहं ता-
मितः परं किं करणीयमस्ति ॥ ४७ ॥

अद्राक्षमेनां तरसैव नम्रा-
न्कुल्यामिवायासलवं विनैव ।
संतारयन्तीं भववारिराशि-
मितः परं किं करणीयमस्ति ॥ ४८ ॥

अद्राक्षमद्वैतविबोधनार्थं
कण्ठेन कम्बोर्वचसा पिकस्य ।
मध्येन सिंह्या दधतीमभेद-
मितः परं किं करणीयमस्ति ॥ ४९ ॥

अद्राक्षमेनां दयया जवेन
प्रकुर्वतीं स्वाङ्घ्रिसरोजनम्रान् ।
संपन्नसार्वज्ञ्यसमस्तशक्ती-
नितः परं किं करणीयमस्ति ॥ ५० ॥

अद्राक्षमग्राह्यनिजस्वरूपां
गूढामशेषे किल भूतवर्गे ।
ग्राह्यां सुखेनैव सुसूक्ष्मधीभि-
रितः परं किं करणीयमस्ति ॥ ५१ ॥

अद्राक्षमक्षासुमनोविभिन्न-
सच्चित्सुखाकारतया गुरूक्त्या ।
अवापमानन्दमपायशून्य-
मितः परं किं करणीयमस्ति ॥ ५२ ॥

अद्राक्षमेनां मुनिभिर्हि साह-
महं च सेति व्यतिहारतो या ।
विभाव्यते तां त्रिजगत्सवित्री-
मितः परं किं करणीयमस्ति ॥ ५३ ॥

अद्राक्षमष्टादशसंख्यविद्या
वश्या यदङ्घ्र्यम्बुजलग्नबुद्धेः ।
तां सर्वविद्यामयदिव्यदेहा-
मितः परं किं करणीयमस्ति ॥ ५४ ॥

अद्राक्षमेनां परिहृत्य पञ्च-
कोशान्सुधीभिः परिचिन्त्यमानाम् ।
वेदान्तसिद्धान्तविचारशीलै-
रितः परं किं करणीयमस्ति ॥ ५५ ॥

अद्राक्षमाधारगतत्रिकोणे
संतप्तहेमप्रभलिङ्गरूपाम् ।
अनाहताख्येऽरुणलिङ्गरूपा-
मितः परं किं करणीयमस्ति ॥ ९६ ॥

अद्राक्षमब्जायुतकोटिशुक्ल-
लिङ्गस्वरूपां कमले शिरःस्थे ।
वाणीं मनोजन्मपरस्वरूपा-
मितः परं किं करणीयमस्ति ॥ ९७ ॥

अद्राक्षमेनां गृहदारपुत्र-
देहेष्वहंताममते जहाति ।
यत्पादपाथोजविचिन्तनात्ता-
मितः परं किं करणीयमस्ति ॥ ९८ ॥

अद्राक्षमेनां हरिदन्तजाल-
विख्यातपाण्डित्ययुता भवन्ति ।
यत्पादसंसक्तहृदो मुहुस्ता-
मितः परं किं करणीयमस्ति ॥ ९९ ॥

अद्राक्षमेनां मदवद्विवादि-
गर्वेभनिर्वापणपञ्चवक्त्राः ।
यत्पादपङ्केरुहपूजकास्ता-
मितः परं किं करणीयमस्ति ॥ ६० ॥

अद्राक्षमेनामपि किंपचानः
सुरेन्द्रतुल्यः प्रभवेज्जवेन ।
यन्मन्त्रजापाद्दृढभक्तितस्ता-
मितः परं किं करणीयमस्ति ॥ ६१ ॥

अद्राक्षमम्लानसरोजमाला-
विभूषितोरःस्थलशीर्षभागाम् ।
अमर्त्यतेजःसमुदायरूपा-
मितः परं किं करणीयमस्ति ॥ ६२ ॥

अद्राक्षमङ्गप्रभवप्रभूत-
व्यथानभिज्ञैः परिचिन्त्यमानाम् ।
चित्तामलत्वप्रदनैजचिन्ता-
मितः परं किं करणीयमस्ति ॥ ६३ ॥

अद्राक्षमात्मेष्टवरप्रदान-
संतोषितानेकनतिप्रधानाम् ।
अजातरूपामपि जातरूपा-
मितः परं किं करणीयमस्ति ॥ ६४ ॥

अद्राक्षं नारदाद्यैः सुरमुनिनिकरैर्गीयमानापदानां
नृत्यद्दिव्याङ्गनानां करचरणलसत्कङ्कणानां रवौघैः ।
संपूर्णाशावकाशां नवनवकविताचातुरीदानदक्षां
शृङ्गाद्रौ चक्रराजस्थिरकृतनिलयां शारदां पारदाभाम् ॥

इति श्रीशारदाचतुःषष्टिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीशारदामहिमस्तवः ॥



श्रृङ्गाद्रिवासाय विधिप्रियाय
कारुण्यवाराम्बुधये नताय ।
विज्ञानदायाखिलभोगदाय
श्रीशारदाख्याय नमो महिम्ने ॥ १ ॥

तुङ्गातटावासकृतादराय
भृङ्गालिविद्वेषिकचोज्ज्वलाय ।
अङ्गाधरीभूतमनोज्ञहेम्ने
श्रृङ्गारसीम्नेऽस्तु नमो महिम्ने ॥ २ ॥

वीणालसत्पाणिसरोरुहाय
शोणाधरायाखिलभाग्यदाय ।
काणादशास्त्रप्रमुखेषु चण्ड-
प्रज्ञाप्रदायास्तु नमो महिम्ने ॥ ३ ॥

चन्द्रप्रभायशसहोदराय
चन्द्रार्भकालंकृतमस्तकाय ।
इन्द्रादिदेवोत्तमपूजिताय
कारुण्यसान्द्राय नमो महिम्ने ॥ ४ ॥

इति श्रीशारदामहिमस्तवः संपूर्णः ॥



॥ श्रीः ॥

# ॥ श्रीविधिमानसहंसास्तोत्रम्



पापिषु प्रथमतो गणनीयं
पुण्यवज्जनसुदूरगतं माम् ।
नागराजमिव पङ्कजचक्षु-
र्वाणि पाहि विधिमानसहंसे ॥ १ ॥

मांसरक्तमलपूर्णशरीरे
पूतिगन्धनिलयेऽस्थिरवर्ये ।
आत्मबुद्धिमचलां दधतं मां
वाणि पाहि विधिमानसहंसे ॥ २ ॥

मोहलोभमुखरोगविशीर्णं
जन्ममृत्युभयतप्तहृदब्जम् ।
शान्तिदान्तिमुखमातृविहीनं
वाणि पाहि विधिमानसहंसे ॥ ३ ॥

वेदशीर्षपरिशीलनशून्यं
पादपद्मनमनेऽप्यलसं ते ।
पाणिपङ्कजलसच्छुकबाले
वाणि पाहि विधिमानसहंसे ॥ ४ ॥

इति श्रीविधिमानसहंसास्तोत्रं संपूर्णम् ॥



श्रीशारदागौरीसहोत्सवकाले

# ॥ श्रीशारदास्तुतिः ॥



इयं प्रजावती तस्मा-
त्सृष्टिकर्तुः सती यतः ।
तस्मात्प्रजावतीं त्यक्त्वा
स्थातुमीष्टे न भारती ॥ १ ॥

को वात्मानं विना तिष्ठे-
द्ब्रूत विद्वद्वरा भुवि ।
प्रजावत्या ततः साकं
भातीयं शारदाम्बिका ॥ २ ॥

तिष्ये युगे दुष्टतरान्तरङ्ग-
जनस्य तत्त्वप्रतिबोधनाय ।
नालं ममैकं वपुरित्यवेत्य
द्वैरूप्यमङ्गीकुरुषे किमम्ब ॥ ३ ॥

इति श्रीशारदास्तुतिः संपूर्णा ॥

॥ श्रीः ॥

# ॥ श्रीवाणीपाण्यवलम्बस्तुतिः ॥



जाड्यवारिधिनिमग्नसुबुद्धे-
जातरूपसदृशच्छविकाये ।
वासवादिदिविषत्प्रवरेड्ये
वाणि देहि मम पाण्यवलम्बम् ॥ १ ॥

पाणिनिर्जितसरोरुहगर्वे
पारदे विविधदुःखपयोधेः ॥
वासनाविरहितैर्लघुलभ्ये
वाणि देहि मम पाण्यवलम्बम् ॥ २ ॥

शृङ्गशैलशिखरादृतवासे-
ऽनङ्गगर्वहरशंभुसगर्भ्ये ।
तुङ्गमङ्गलनिदानकटाक्षे
वाणि देहि मम पाण्यवलम्बम् ॥ ३ ॥

शारदाभ्रसदृशाम्बरवीते
नारदादिमुनिचिन्तितपादे ।
नीलनीरदसदृक्कचभारे
वाणि देहि मम पाण्यवलम्बम् ॥ ४ ॥

यत्पदाम्बुरुहपूजकवक्त्रा-
दाशु निःसरति वागनवद्या ।
स्वर्धुनी हिमगिरेरिव सा त्वं
वाणि देहि मम पाण्यवलम्बम् ॥ ५ ॥

जातुचित्प्रणमतोऽपि पदाब्जे
देवराजसदृशान्प्रकरोषि ।
यत्तदम्ब चरणौ तव वन्दे
वाणि देहि मम पाण्यवलम्बम् ॥ ६ ॥

शान्तिदान्तिमुखसाधनयुक्तै-
र्वेदशीर्षपरिशीलनसक्तैः ।
आदरादहरहःपरिसेव्ये
वाणि देहि मम पाण्यवलम्बम् ॥ ७ ॥

कोशपञ्चकनिषेधनपूर्वं
क्लेशपञ्चकमपि प्रविहाय ।
यां प्रपश्यति यतिर्हृदि सा त्वं
वाणि देहि मम पाण्यवलम्बम् ॥ ८ ॥

वन्द्यमानचरणे सुरबृन्दै-
र्गीयमानचरिते तुरगास्यैः ।
जप्यमाननिजनाम्नि मुनीन्द्रै-
र्वाणि देहि मम पाण्यवलम्बम् ॥ ९ ॥

संनिरीक्ष्य कमलानि यदक्षी
साम्यमाप्तुमनयोस्तपसाम्भः ।
कण्ठदघ्नमधिजग्मुरसौ सा
वाणि देहि मम पाण्यवलम्बम् ॥ १० ॥

पुण्यमम्ब न कृतं मतिपूर्वं
पापमेव रचितं त्वतियत्नात् ।
तेन तप्तमनिशं हृदयाब्जं
वाणि देहि मम पाण्यवलम्बम् ॥ ११ ॥

नाहमम्ब सरसां च सुवर्णा-
    मातनोमि कवितां विविधार्थाम् ।
केन पूजयति मां भुवि लोको
    वाणि देहि मम पाण्यवलम्बम् ॥ १२ ॥

अक्षपादकणभुक्फणिनाथै-
    र्देवहूतिसुतजैमिनिमुख्यैः ।
प्रोक्तशास्त्रनिचये न हि बुद्धि-
    र्वाणि देहि मम पाण्यवलम्बम् ॥ १३ ॥

नैव पादसरसीरुहयोस्ते
    पूजनं प्रतिदिनं प्रकरोमि ।
हेतुशून्यकरुणाजनिभूमे
    वाणि देहि मम पाण्यवलम्बम् ॥ १४ ॥

संनिरुध्य हृदयाम्बुजमध्ये
    स्वान्तमम्ब तव सुन्दरमूर्तेः ।
ध्यानमप्यनुदिनं न हि कुर्वे
    वाणि देहि मम पाण्यवलम्बम् ॥ १५ ॥

दुःखजन्मवसुधा विषया इ-
त्यादरेण गुरुभिः श्रुतिशीर्षैः ।
बोधितोऽपि न हि यामि विरक्तिं
वाणि देहि मम पाण्यवलम्बम् ॥ १६ ॥

पुत्रमित्रगृहदारजनन्यो
भ्रातृबन्धुधनभृत्यमुखा वा ।
नैव कालवशगस्य सहाया
वाणि देहि मम पाण्यवलम्बम् ॥ १७ ॥

एकमेव सदबाधितमन्य-
त्तुच्छमित्यसकृदागमशीर्षम् ।
वक्त्यथापि न निवृत्तिरनित्या-
द्वाणि देहि मम पाण्यवलम्बम् ॥ १८ ॥

जन्ममृत्युमयनीरधिमध्ये
मज्जतो विविधरुङ्मकराढ्ये ।
पश्यतोऽपि न हि भीतिरनेका-
न्वाणि देहि मम पाण्यवलम्बम् ॥ १९ ॥

त्वत्पदाम्बुरुहयुग्ममपास्य
  प्राक्तनाघपरिमार्जनदक्षम् ।
नास्ति तारणविधानसमर्थं
  वाणि देहि मम पाण्यवलम्बम् ॥ २० ॥

बालचन्द्रपरिचुम्बितशीर्षे
  बाहुसक्तकनकाङ्गदरम्ये ।
कण्ठलोलवरमौक्तिकहारे
  वाणि देहि मम पाण्यवलम्बम् ॥ २१ ॥

आननेन चरणेन कटाक्षै-
  र्नीरजासनमनोहरकान्ते ।
चन्द्रमम्बुजमलिं च हसन्ति
  वाणि देहि मम पाण्यवलम्बम् ॥ २२ ॥

मध्यनिर्जितमृगाधिपगर्वे
  मत्तवारणसदृग्गतिशीले ।
मञ्जुशिञ्जितमहाभरणाढ्ये
  वाणि देहि मम पाण्यवलम्बम् ॥ २३ ॥

तापमम्ब विनिवार्य समस्तं
पापमप्यहरहःकृतमाशु ।
चित्तशुद्धिमचिरात्कुरु मात-
र्वाणि देहि मम पाण्यवलम्बम् ॥ २४ ॥

पादपद्मयुगमर्दनरूपा
पात्रवस्त्रपरिशुद्धिमुखा वा ।
श्रीगुरोर्न हि कृता बत सेवा
वाणि देहि मम पाण्यवलम्बम् ॥ २५ ॥

मन्त्रराजलयपूर्वकयोगा-
न्योगिनीहृदयमुख्यसुतन्त्रान् ।
नैव वेद्मि करुणामृतराशे
वाणि देहि मम पाण्यवलम्बम् ॥ २६ ॥

कामलोभमदपूरितचेतः-
प्राणिदूरनिजपादपयोजे ।
कामनिर्मथनदक्षसगर्भ्ये
वाणि देहि मम पाण्यवलम्बम् ॥ २७ ॥

अङ्गयष्टिरुचिनिर्जितभर्मे
कुम्भिकुम्भपरिपन्थिकुचाढ्ये ।
भृङ्गनीलचिकुरे तनुमध्ये
वाणि देहि मम पाण्यवलम्बम् ॥ २८ ॥

स्वाङ्घ्रिसेवनसमागतकाष्ठा-
कान्तदारकरमर्दितपादे ।
स्वामिनि त्रिजगतां धृतवीणे
वाणि देहि मम पाण्यवलम्बम् ॥ २९ ॥

नीलनागनिवहा विविशुर्य-
द्वेणिकां मुहुरवेक्ष्य बिलानि ।
लज्जयाशु विधिभामिनि सा त्वं
वाणि देहि मम पाण्यवलम्बम् ॥ ३० ॥

शान्तिदान्तिविरतिप्रमुखा मां
मोहकोपमुखरोगविशीर्णम् ।
वीक्ष्य यान्ति तरसा बहुदूरं
वाणि देहि मम पाण्यवलम्बम् ॥ ३१ ॥

काकलोकसदृशः पिकलोकः
केकिजालमपि शोकिनितान्तम् ।
यद्वचःश्रवणतः खलु सा त्वं
वाणि देहि मम पाण्यवलम्बम् ॥ ३२ ॥

राजराजपदवीं क्षणमात्रा-
द्याति यत्पदसरोरुहनत्या ।
दीनराडपि जनो भुवि सा त्वं
वाणि देहि मम पाण्यवलम्बम् ॥ ३३ ॥

शीघ्रकाव्यकरणेऽम्ब पटुत्वं
यान्ति मूकबधिरादिममर्त्याः ।
यत्पदप्रणतितो भुवि सा त्वं
वाणि देहि मम पाण्यवलम्बम् ॥ ३४ ॥

ब्राह्मि भारति सरस्वति भाषे
वाक्सवित्रि कमलोद्भवजाये ।
पाणिपङ्कजलसद्वरवीणे
वाणि देहि मम पाण्यवलम्बम् ॥ ३५ ॥

चामरप्रविलसत्करगौरी-
विष्णुदारपरिसेवितपार्श्वे ।
चामराजसुतपालनसक्ते
वाणि देहि मम पाण्यवलम्बम् ॥ ३६ ॥

शेषशैलपतिनामकमन्त्रि-
श्रेष्ठपालनपरायणचित्ते ।
शेवधेऽब्जभवपूर्ववृषाणां
वाणि देहि मम पाण्यवलम्बम् ॥ ३७ ॥

श्रीनृसिंहशिशुरामयुतश्री-
कण्ठपालननिषक्तमनस्के ।
श्रीशशंकरमुखामरपूज्ये
वाणि देहि मम पाण्यवलम्बम् ॥ ३८ ॥

**इति श्रीवाणीपाण्यवलम्बनस्तवः संपूर्णः ॥**



॥ श्रीः ॥

# ॥ श्रीवाणीशरणागतिस्तोत्रम् ॥



वेणीं सितेतरसमीरणभोजितुल्यां
वाणीं च केकिकुलगर्वहरां वहन्तीम् ।
श्रोणीं गिरिस्मयविभेदचणां दधानां
वाणीमनन्यशरणः शरणं प्रपद्ये ॥ १ ॥

वाचः प्रयत्नमनपेक्ष्य मुखारविन्दा-
द्व्राताहताब्धिलहरीमदहारदक्षाः ।
वादेषु यत्करुणया प्रगलन्ति तां त्वां
वाणीमनन्यशरणः शरणं प्रपद्ये ॥ २ ॥

राकाशशाङ्कसदृशाननपङ्कजातां
शोकापहारचतुराङ्घ्रिसरोजपूजाम् ।
पाकारिमुख्यदिविषत्प्रवरेड्यमानां
वाणीमनन्यशरणः शरणं प्रपद्ये ॥ ३ ॥

बालाडुपप्रावलसत्कचमध्यभागा
   नीलोत्पलप्रतिभटाक्षिविराजमानाम् ।
कालोन्मिषत्किसलयारुणपादपद्मां
   वाणीमनन्यशरणः शरणं प्रपद्ये ॥ ४ ॥

इति श्रीवाणीशरणागतिस्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीमातृपदपङ्कजाष्टकम् ॥



मातस्त्वत्पदपङ्कजं कलयतां चेतोऽम्बुजे सन्ततं
मानाथाम्बुजसंभवाद्रितनयाकान्तैः समाराधितम् ।
वाञ्छापूरणनिर्जितामरमहीरुङ्गर्वसर्वस्वकं
वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्रोदरात् ॥

मातस्त्वत्पदपङ्कजं मुनिमनःकासारवासादरं
मायामोहमहान्धकारमिहिरं मानातिगप्राभवम् ।
मातङ्गाभिमतिं स्वकीयगमनैर्निर्मूलयत्कौतुका-
द्वन्देऽमन्दतपःफलाप्यनमनस्तोत्रार्चनाप्रक्रमम् ॥

मातस्त्वत्पदपङ्कजं प्रणमतामानन्दवारांनिधे
राकाशारदपूर्णचन्द्रनिकरं कामाहिपक्षीश्वरम् ।
बृन्दं प्राणभृतां स्वनाम वदतामत्यादरात्सत्वरं
षड्भाषासरिदीश्वरं प्रतिदधत्षाण्मातुरार्च्यं भजे ॥

कामं फालतले दुरक्षरततिर्दैवी ममास्तां न भी-
मातस्त्वत्पदपङ्कजोत्थरजसा लुम्पामि तां निश्चितम् ।
मार्कण्डेयमुनिर्यथा भवपदाम्भोजार्चनाप्राभवा-
त्कालं तद्वदहं चतुर्मुखमुखाम्भोजातसूर्यप्रभे ॥

पापानि प्रशमं नयाशु ममतां देहेन्द्रियप्राणगां
कामादीनपि वैरिणो दृढतरान्मोक्षाध्वविघ्नप्रदान् ।
स्निग्धान्पोषय सन्ततं शमदमध्यानादिमान्मोदतो
मातस्त्वत्पदपङ्कजं हृदि सदा कुर्वे गिरां देवते ॥

मातस्त्वत्पदपङ्कजस्य मनसा वाचा क्रियातोऽपि वा
ये कुर्वन्ति मुदान्वहं बहुविधैर्दिव्यैः सुमैरर्चनाम् ।
शीघ्रं ते प्रभवन्ति भूमिपतयो निन्दन्ति च स्वश्रिया
जम्भारातिमपि ध्रुवं शतमखीकष्टाप्तनाकश्रियम् ॥

मातस्त्वत्पदपङ्कजं शिरसि ये पद्माटवीमध्यत-
श्चन्द्राभं प्रविचिन्तयन्ति पुरुषाः पीयूषवर्ष्यन्वहम् ।
ते मृत्युं प्रविजित्य रोगरहिताः सम्यग्दृढाङ्गाश्चिरं
जीवन्त्येव मृणालकोमलवपुष्मन्तः सुरूपा भुवि ॥

मातस्त्वत्पदपङ्कजं हृदि मुदा ध्यायन्ति ये मानवाः
सच्चिद्रूपमशेषवेदशिरसां तात्पर्यगम्यं मुहुः ।
अत्यागेऽपि तनोरखण्डपरमानन्दं वहन्तः सदा
सर्वं विश्वमिदं विनाशि तरसा पश्यन्ति ते पूरुषाः ॥

इति श्रीमातृपदपङ्कजाष्टकं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीकमलजदयिताष्टकम् ॥



शृङ्गक्ष्माभृन्निवासे शुकमुखमुनिभिः सेव्यमानाङ्घ्रिपद्मे
स्वाङ्गच्छायाविधूतामृतकरसुरराड्वाहने वाक्सवित्रि ।
शंभुश्रीनाथमुख्यामरवरनिकरैर्मोदतः पूज्यमाने
विद्यां शुद्धां च बुद्धिं कमलजदयिते सत्वरं देहि मह्यम् ॥

कल्यादौ पार्वतीशः प्रवरसुरगणप्रार्थितः श्रौतवर्त्म
प्राबल्यं नेतुकामो यतिवरवपुषागत्य यां शृङ्गशैले ।
संस्थाप्यार्चां प्रचक्रे बहुविधनतिभिः सा त्वमिन्द्वर्धचूडा
विद्यां शुद्धां च बुद्धिं कमलजदयिते सत्वरं देहि मह्यम् ॥

पापौघं ध्वंसयित्वा बहुजनिरचितं किं च पुण्यालिमारा-
त्संपाद्यास्तिक्यबुद्धिं श्रुतिगुरुवचनेष्वादरं भक्तिदार्ढ्यम् ।
देवाचार्यद्विजातिष्वपि मनुनिवहे तावकीने नितान्तं
विद्यां शुद्धां च बुद्धिं कमलजदयिते सत्वरं देहि मह्यम् ॥

विद्यामुद्राक्षमालामृतघटविलसत्पाणिपाथोजजाले
विद्यादानप्रवीणे जडबधिरमुखेभ्योऽपि शीघ्रं नतेभ्यः ।
कामादीनान्तरान्मत्सहजरिपुवरान्देवि निर्मूल्य वेगा-
द्विद्यां शुद्धां च बुद्धिं कमलजदयिते सत्वरं देहि मह्यम् ॥

कर्मस्वात्मोचितेषु स्थिरतरधिषणां देहदार्ढ्यं तदर्थं
दीर्घं चायुर्यशश्च त्रिभुवनविदितं पापमार्गाद्विरक्तिम् ।
सत्सङ्गं सत्कथायाः श्रवणमपि सदा देवि दत्त्वा कृपाब्धे
विद्यां शुद्धां च बुद्धिं कमलजदयिते सत्वरं देहि मह्यम् ॥

मातस्त्वत्पादपद्मं न विधिकुसुमैः पूजितं जातु भक्त्या
गातुं नैवाहमीशे जडमतिरलसस्त्वद्गुणान्दिव्यपद्यैः ।
मूके सेवाविहीनेऽप्यनुपमकरुणामर्भकेऽम्बेव कृत्वा
विद्यां शुद्धां च बुद्धिं कमलजदयिते सत्वरं देहि मह्यम् ॥

शान्त्याद्याः संपदो मे वितर शुभकरीर्नित्यतद्भिन्नबोधं
वैराग्यं मोक्षवाञ्छामपि लघु कलय श्रीशिवासेव्यमाने ।
विद्यातीर्थादियोगिप्रवरकरसरोजातसंपूजिताङ्घ्रे
विद्यां शुद्धां च बुद्धिं कमलजदयिते सत्वरं देहि मह्यम् ॥

सच्चिद्रूपात्मनो मे श्रुतिमनननिदिध्यासनान्याशु मातः
संपाद्य स्वान्तमेतद्रुचियुतमनिशं निर्विकल्पे समाधौ ।
तुङ्गातीराङ्कराजद्वरगृहविलसच्चक्रराजासनस्थे
विद्यां शुद्धां च बुद्धिं कमलजदयिते सत्वरं देहि मह्यम् ॥

इति श्रीकमलजदयिताष्टकं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीवाग्देवीस्तवः ॥



वादे शक्तिप्रदात्री प्रणतजनततेः सन्ततं सत्सभायां
प्रश्नानां दुस्तराणामपि लघु सुसमाधानमाश्वेव वक्तुम् ।
वागीशाद्यैः सुराग्र्यैर्विविधफलकृते सन्ततं पूज्यमाना
वाग्देवी वाञ्छितं मे वितरतु तरसा शृङ्गभूभृन्निवासा ॥

व्याख्यामुद्राक्षमालाकलशसुलिखितै राजदम्भोजपाणिः
काव्यालङ्कारमुख्येष्वपि निशितधियं सर्वशास्त्रेषु तूर्णम् ।
मूकेभ्योऽप्यार्द्रचित्ता दिशति करुणया या जवात्सा कृपाब्धि-
र्वाग्देवी वाञ्छितं मे वितरतु तरसा शृङ्गभूभृन्निवासा ॥

जाड्यध्वान्तार्कपङ्क्तिस्तनुजितरजनीकान्तगर्वागमानां
शीर्षैः संस्तूयमाना मुनिवरनिकरैः सन्ततं भक्तिनम्रैः ।
कारुण्यापारवारांनिधिरगतनयासिन्धुकन्याभिवाद्या
वाग्देवी वाञ्छितं मे वितरतु तरसा शृङ्गभूभृन्निवासा ॥

इति श्रीवाग्देवीस्तवः संपूर्णः ॥

॥ श्रीः ॥

# ॥ श्रीवाग्वादिनीषट्कम् ॥



वरदाप्यहेतुकरुणा-
जन्मावनिरपि पयोजभवजाये ।
किं कुरुषे न कृपां मयि
वद वद वाग्वादिनि स्वाहा ॥ १ ॥

किं वा ममास्ति महती
पापततिस्तत्प्रभेदने तरसा ।
किं वा न तेऽस्ति शक्ति-
र्वद वद वाग्वादिनि स्वाहा ॥ २ ॥

किं जीवः परमशिवा-
द्भिन्नोऽभिन्नोऽथ भेदश्च ।
औपाधिकः स्वतो वा
वद वद वाग्वादिनि स्वाहा ॥ ३ ॥

वियदादिकं जगदिदं
सर्वं मिथ्याथवा सत्यम् ।
मिथ्यात्वधीः कथं स्या-
द्वद वद वाग्वादिनि स्वाहा ॥ ४ ॥

ज्ञानं कर्म च मिलितं
हेतुर्मोक्षेऽथवा ज्ञानम् ।
तज्ज्ञानं केन भवे-
द्वद वद वाग्वादिनि स्वाहा ॥ ५ ॥

ज्ञानं विचारसाध्यं
किं वा योगेन कर्मसाहस्त्रैः ।
कीदृक्सोऽपि विचारो
वद वद वाग्वादिनि स्वाहा ॥ ६ ॥

इति श्रीवाग्वादिनीषट्कं संपूर्णम् ॥



॥ श्रीः ॥

जैत्रयात्रामधिकृत्य श्रीवाण्याज्ञानन्तरं

# ॥ श्रीवाणीप्रश्नमालास्तुतिः ॥



किं नाहं पुत्रस्तव
  मातुः सचराचरस्य जगतोऽस्य ।
किं मां दूरीकुरुषे
  देवि गिरां ब्रूहि कारणं तत्र ॥ १ ॥

किं चाद्गुराचार्यपादा-
  स्त्वद्भक्ता मद्गुरूत्तमाः पूर्वम् ।
औरसतनयं मां तव
  कस्माद्दूरीकरोषि वद वाणि ॥ २ ॥

आनीय दूरतो मां
  मातस्त्वत्पादसविधमतिकृपया ।
परिपाल्य च सुचिरं मां
  कस्माद्दूरीकरोषि वद वाणि ॥ ३ ॥

अतिपरिचयादवज्ञा
प्रभवेत्पुत्रेषु किं सवित्रीणाम् ।
न हि सा क्वचिदपि दृष्टा
कस्माद्दूरीकरोषि वद वाणि ॥ ४ ॥

कादाचित्कनमस्कृति-
कर्तॄणामप्यभीष्टदे तरसा ।
नाहं सकृदपि नन्ता
कस्माद्दूरीकरोषि वद वाणि ॥ ५ ॥

गुरुरूपणाबाल्या-
त्सोढ्वा मन्तूंश्च मत्कृतान्विविधान् ।
परिरक्ष्य करुणया मां
कस्माद्दूरीकरोषि वद वाणि ॥ ६ ॥

जगतां पालनमनिशं
कुर्वन्त्यास्ते भवेत्कियान्भारः ।
अहमम्ब दीनवर्यः
कस्माद्दूरीकरोषि वद वाणि ॥ ७ ॥

पापान्निवार्य सरणौ
विमलायां मे प्रवर्तने तरसा ।
कर्तव्ये सति कृपया
कस्माद्दूरीकरोषि वद वाणि ॥ ८ ॥

यद्यप्यन्यानन्या-
न्देवानाराधयामि न त्वं ते ।
सर्वात्मिकेति चपलः
कस्माद्दूरीकरोषि वद वाणि ॥ ९ ॥

यात्राशक्तमिमं मां
गलितशरीरमृजा समाक्रान्तम् ।
पात्रमहेतुदयायाः
कस्माद्दूरीकरोषि वद वाणि ॥ १० ॥

तव सद्मनि गुरुसदने
विद्यातीर्थालये च बहुसुखतः ।
खेलां कुर्वन्तं मां
कस्माद्दूरीकरोषि वद वाणि ॥ ११ ॥

त्वत्क्षेत्रनिकटराज-
न्नरसिंहाख्याचलशृङ्गाग्रे ।
स्वैरविहारकृतं मां
कस्माद्दूरीकरोषि वद वाणि ॥ १२ ॥

त्वत्पादपूततुङ्गा-
तीरे विजने वने चरन्तं माम् ।
अनुघस्रं मोदभरा-
त्कस्माद्दूरीकरोषि वद वाणि ॥ १३ ॥

तुङ्गातीरे दिनकर-
निवेशनिकटस्थले विपुले ।
ध्यायन्तं परतत्त्वं
कस्माद्दूरीकरोषि वद वाणि ॥ १४ ॥

तुङ्गातीरे रघुवर-
मन्दिरपुरतः सुदीर्घपाषाणे ।
कुतुकाद्विहरन्तं मां
कस्माद्दूरीकरोषि वद वाणि ॥ १५ ॥

जातु च नरसिंहपुरे
तुङ्गातीरे सुसैकते मोदात् ।
विहृतिं कुर्वाणं मां
कस्माद्दूरीकरोषि वद वाणि ॥ १६ ॥

यतिवरकृतात्मविद्या-
विलासमनिशं पठन्तमतिमोदात् ।
कुहचित्तुङ्गातीरे
कस्माद्दूरीकरोषि वद वाणि ॥ १७ ॥

शंकरभगवत्पाद-
प्रणीतचूडामणिं विवेकादिम् ।
शृण्वन्तं नृहरिवने
कस्माद्दूरीकरोषि वद वाणि ॥ १८ ॥

इति श्रीवाणीप्रश्नमालास्तुतिः संपूर्णा ॥



॥ श्रीः ॥

श्रीकालटिक्षेत्रे

# ॥ श्रीशारदादशकम् ॥



करवाणि वाणि किं वा
जगति प्रचयाय धर्ममार्गस्य ।
कथयाशु तत्करोम्यह-
महर्निशं तत्र मा कृथा विशयम् ॥ १ ॥

गणनां विधाय मत्कृत-
पापानां किं धृताक्षमालिकया ।
तान्ताद्याप्यसमाप्ते-
र्निश्चलतां पाणिपङ्कजे धत्से ॥ २ ॥

विविधाशया मदीयं
निकटं दूराज्जनाः समायान्ति ।
तेषां तस्याः कथमिव
पूरणमहमम्ब सत्वरं कुर्याम् ॥ ३ ॥

गतिजितमरालगर्वां
   मतिदानधुरन्धरां प्रणम्रेभ्यः ।
यतिनाथसेवितपदा-
   मतिभक्त्या नौमि शारदां सदयाम् ॥ ४ ॥

जगदम्बां नगतनुजा-
   धवसहजां जातरूपतनुवल्लीम् ।
नीलेन्दीवरनयनां
   बालेन्दुकचां नमामि विधिजायाम् ॥ ५ ॥

भारो भारति न स्या-
   द्वसुधायास्तद्वदम्ब कुरु शीघ्रम् ।
नास्तिकतानास्तिकता-
   करणात्कारुण्यदुग्धवाराशे ॥ ६ ॥

निकटे वसन्तमनिशं
   पक्षिणमपि पालयामि करतोऽहम् ।
किमु भक्तियुक्तलोका-
   निति बोधार्थं करे शुकं धत्से ॥ ७ ॥

श्रृङ्गाद्रिस्थितजनतां
रोगैरुपद्रुतां वाणि ।
विनिवार्य सकलरोगा-
न्पालय करुणार्द्रदृष्टिपातेन ॥ ८ ॥

मद्विरहादतिभीता-
न्मदेकशरणानतीव दुःखार्तान् ।
मयि यदि करुणा तव भो
पालय श्रृङ्गाद्रिवासिनो लोकान् ॥ ९ ॥

सदनमहेतुकृपाया
रदनविनिर्धूतकुन्दगर्वालिम् ।
मदनरिपुसहोत्थां
सरसिजभवभामिनीं हृदा कलये ॥ १० ॥

इति श्रीशारदादशकं संपूर्णम् ॥



॥ श्रीः ॥

श्रीकालटिक्षेत्रे

# श्रीशारदाभुजङ्गप्रयातस्तुतिः ॥



स्मितोद्धूतराकानिशानायकायै
कपोलप्रभानिर्जितादर्शकायै ।
स्वनेत्रावधूताब्जजातध्वजायै
सरोजोत्थसत्यै नमः शारदायै ॥ १ ॥

भवाम्भोधिपारं नयन्त्यै स्वभक्ता-
न्विनायासलेशं कृपानौकयैव ।
भवाम्भोजनेत्रादिसंसेविताया
अजस्रं हि कुर्मो नमः शारदायै ॥ २ ॥

सुधाकुम्भमुद्राविराजत्करायै
व्यथाशून्यचित्तैः सदा सेवितायै ।
क्षुधाकामलोभादिनिर्वापणायै
विधातृप्रियायै नमः शारदायै ॥ ३ ॥

नतेष्टप्रदानाय भूमिं गतायै
गतेनाच्छबर्हाभिमानं हरन्त्यै ।
स्मितेनेन्दुदर्पं च तोषं व्रजन्त्यै
सुतेनेव नम्रैर्नमः शारदायै ॥ ४ ॥

नतालीयदारिद्र्यदुःखापहन्त्र्यै
तथा भीतिभूतादिबाधाहरायै ।
फणीन्द्राभवेण्यै गिरीन्द्रस्तनायै
विधातृप्रियायै नमः शारदायै ॥ ५ ॥

सुधाकुम्भमुद्राक्षमालाविराज-
त्करायै कराम्भोजसंमर्दितायै ।
सुराणां वराणां सदा मानिनीनां
मुदा सर्वदा मे नमः शारदायै ॥ ६ ॥

समस्तैश्च वेदैः सदा गीतकीर्त्यै
निराशान्तरङ्गाम्बुजातस्थितायै ।
पुरारातिपद्माक्षपद्मोद्भवाद्यै-
र्मुदा पूजितायै नमः शारदायै ॥ ७ ॥

अविद्यापदुद्दारबद्धादरायै
तथा बुद्धिसंपत्प्रदानोत्सुकायै ।
नतेभ्यः कदाचित्स्वपादाम्बुजाते
विधेः पुण्यतत्यै नमः शारदायै ॥ ८ ॥

पदाम्भोजनम्रान्कृते भीतभीता-
न्द्रुतं मृत्युभीतेर्विमुक्तान्विधातुम् ।
सुधापूर्णकुम्भं करे किं विधत्से
द्रुतं पाययित्वा यथातृप्ति वाणि ॥ ९ ॥

महान्तो हि मह्यं हृदम्भोरुहाणि
प्रमोदात्समर्प्यासते सौख्यभाजः ।
इति ख्यापनायानतानां कृपाब्धे
सरोजान्यसंख्यानि धत्से किमम्ब ॥ १० ॥

शरच्चन्द्रनीकाशवस्त्रेण वीता
कनद्धर्मयष्टेरहंकारभेत्त्री ।
किरीटं सताटङ्कमत्यन्तरम्यं
वहन्ती हृदब्जे स्फुरत्वम्बमूर्तिः ॥ ११ ॥

निगृह्याक्षवर्गं तपो वाणि कर्तुं
न शक्नोमि यस्मादवश्याक्षवर्गः ।
ततो मय्यनाथे दया पारशून्या
विधेया विधातृप्रिये शारदाम्ब ॥ १२ ॥

कवित्वं पवित्वं द्विषच्छैलभेदे
रवित्वं नतस्वान्तहृद्ध्वान्तभेदे ।
शिवत्वं च तत्त्वप्रबोधे ममाम्ब
त्वत्पदद्वयब्जसेवापटुत्वं च देहि ॥ १३ ॥

विलोक्यापि लोको न तृप्तिं प्रयाति
प्रसन्नं मुखेन्दुं कलङ्कादिशून्यम् ।
यदीयं ध्रुवं प्रत्यहं तां कृपाब्धिं
भजे शारदाम्बामजस्रं मदम्बाम् ॥ १४ ॥

पुरा चन्द्रचूडो धृताचार्यरूपो
गिरौ शृङ्गपूर्वे प्रतिष्ठाप्य चक्रे ।
समाराध्य मोदं ययौ यामपारं
भजे शारदाम्बामजस्रं मदम्बाम् ॥ १५ ॥

नवाम्भोधिपारं नयन्त्यै स्वभक्ता-
न्भवाम्भोजनेत्राजसंपूज्यमानाम् ।
भवद्भव्यभूताघविध्वंसदक्षां
भजे शारदाम्बामजस्रं मदम्बाम् ॥ १६ ॥

वराक त्वरा का तवेष्टप्रदाने
कथं पुण्यहीनाय तुभ्यं ददानि ।
इति त्वं गिरां देवि मा ब्रूहि यस्मा-
दघारण्यदावानलेति प्रसिद्धा ॥ १७ ॥

इति श्रीशारदाभुजङ्गप्रयातस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

श्रीकालटिक्षेत्रे

# श्रीशारदाम्बास्तोत्रमालिका ॥



आसेतुशीतगिरिमध्यनिवासिलोका-
न्स्वस्वाश्रमाद्युचितकर्मनिषक्तचित्तान् ।
शीघ्रं विधाय करुणामृतवारिराशे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १ ॥

हंसादिमस्करिवरार्चितपादपद्मे
हंसाग्रययाननिरते मुखनिर्जिताब्जे ।
कंसारिमुख्यसुरनायकपूज्यमाने
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २ ॥

श्वेताम्बुसंभवनिवासनिषक्तबुद्धे
शीतांशुराजतमहीधरतुल्यवर्णे ।
वाताम्बुमात्रपरितुष्टजनालिसेव्ये
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ३ ॥

क्रव्यादवैरिमुखदेववरेड्यपादे
सुव्याहृतिप्रदपदाम्बुजजातुपाते ।
निर्व्याजपूर्णकरुणामृतजन्मभूमे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ४ ॥

भक्त्यादिगन्धरहितान्गुरुपादपद्मे
तत्सेवने च सुतरां विनिवृत्तभावान् ।
लोकानवाम्ब परिशुद्धहृदो विधाय
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ५ ॥

अज्ञातवेदनिचयस्मृतिमुख्यगन्धा-
न्कामार्थमात्रपुरुषार्थधियो मनुष्यान् ।
आम्नायमार्गपथिकांस्तरसा विधाय
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ६ ॥

देहात्मवादनिरतान्सततं हि मोदा-
त्तत्पालनैकनिरतानपि नीचवृत्त्या ।
किं च स्ववृत्तिविमुखान्परिपालयन्ती
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ७ ॥

पापाम्बुराशिविनिमज्जनमुह्यमान-
मेनं दुरन्तविषयाशमजास्यवासे ।
लोकं निवार्य तरसा कृपया दुराशां
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ८ ॥

उद्वेगकालपरितुष्टहृदम्बुजात-
मप्यैहिकादिनिचये स्पृहया विहीनम् ।
भीत्या रुषा च सुतरां रहितं विधाय
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ९ ॥

आकल्पकालटिनिवासनिबद्धदीक्षा
भूत्वा तथाखिलजगत्यपि धर्मवृद्धिम् ।
प्रापय्य लोकपरिरक्षणमाचरन्ती
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १० ॥

भाग्याब्धिपूर्णशरदिन्दुसमूहरूपे
भक्तौघसस्यसितभिन्नपयोदपङ्क्ते ।
वेधोमनोऽम्बुजनिबालदिवाकराभे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ११ ॥

प्राणादिवायुनिचयं विनिरुध्य चेतो
हृत्पङ्कजे चिरतरं तव दिव्यमूर्तेः ।
ध्यानं विभुं रचयितुं प्रविधाय मातः
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १२ ॥

काणादकापिलमुखेषु समस्तशास्त्रे-
ष्वव्याहतां प्रतिभया सहितां मनीषाम् ।
जात्वप्यकर्णविषयेषु वितीर्य तूर्णं
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १३ ॥

लक्ष्येऽखिलश्रुतिमहादिमवाक्यपङ्क्ते-
र्ऋक्षेशगर्वपरिशातनदक्षवक्त्रे ।
यक्षेशपाशिमुखदिक्पतिपूज्यपादे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १४ ॥

दारात्मजावसथपालनसक्तचित्तां-
स्तत्पालनात्तबहुदुःखततीश्च सोढ्वा ।
स्वप्नेऽपि सौख्यरहितान्परिपाह्य लोका-
ञ्छ्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १५ ॥

कारुण्यपूर्णनयने कलिकल्मषघ्नि
कन्दर्पवैरिसहजे कमलायताक्षि ।
कस्तूरिकामकरिकाश्रितगण्डभागे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १६ ॥

नैवापहाय निजधर्ममतीव कष्ट-
कालेऽपि वाणि सुतरां निजधर्मवाञ्छाः ।
भूयासुराशु पुरुषाः कुरु तद्वदम्ब
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १७ ॥

ईहाविहीनजनसन्ततिचिन्त्यमान-
पादारविन्दयुगले प्रणतव्रजाय ।
ईशित्वसिद्धिमुखसिद्धिततिप्रदात्रि
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १८ ॥

बालारुणाधरविनिर्जितपक्वबिम्बे
चेलावधूतशरदभ्रसमस्तगर्वे ।
लीलाविनिर्मितविचित्रजगत्समूहे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ १९ ॥

भक्तिं वितीर्य सुदृढां तव पादपद्मे
दुःखालयेषु विषयेषु विरक्तिदार्ढ्यम् ।
औत्सुक्यमप्यविरलं निगमान्तपाठे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २० ॥

दुर्वादिमत्तगजसिंहधुरन्धरत्वं
शर्वादिसेवितपदे तरसा वितीर्य ।
दुर्वासनां हृदि गतां तरसा प्रमथ्य
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २१ ॥

पादाम्बुजप्रणतलोकविचित्रकाव्य-
कर्तृत्वदानचतुरे चतुरास्यजाये ।
कुम्भीन्द्रकुम्भपरिपन्थिकुचे कुमारि
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २२ ॥

चापल्यनैजजनिभूमिहृदम्बुजातं
पापाम्बुराशिदृढमग्नमपेतपुण्यम् ।
आत्मावबोधविधुरं गुरुभक्तिहीनं
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २३ ॥

रङ्कोऽपि यत्करुणया प्रभवेत्सुरेशो
मूकोऽपि तद्गुरुमहो वचसा जयेच्च ।
सा त्वं प्रभूतधनवाग्विभवप्रदात्रि
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २४ ॥

अम्बाशु बोधय कृपाभरितैः कटाक्षै-
स्तत्त्वं परं यदवलोकनतो न भूयात् ।
भूयोऽपि जन्म पदनम्रततेः कदाचि-
च्छ्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २५ ॥

कालव्यभिख्यपुरवासनिबद्धभावे
कालप्रतीपसहजे कलकण्ठकण्ठे ।
कायप्रभाजिततुषारसितांशुशोभे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २६ ॥

यत्त्वं हि वीक्षणलवेन नतार्भकाणां
संपोषणं प्रकुरुषे जगदम्ब सार्थम् ।
मीनाम्बकत्वमभजद्भवतीह तस्मा-
च्छ्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २७ ॥

अष्टाङ्गयोगमखिलं तरसोपदिश्य
नीत्वा च मध्यपदवीं सहशक्तिवायुम् ।
चेतश्च धामनि परे दृढमारचय्य
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २८ ॥

ऐक्यावबोधनकृते प्रणमज्जनानां
वक्त्रे विधुत्वमथ नेत्रयुगे झषत्वम् ।
मध्ये च पञ्चमुखतां परिधारयन्ती
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ २९ ॥

श्रीशंकरार्यकरपङ्कजपूजिताङ्घ्रे
पाशं विभिद्य तरसा भवनामभाजम् ।
साशंसदाहिविषयेऽप्युपभुक्तपूर्वे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ३० ॥

कीरार्भकप्रविलसत्करपङ्कजाते
स्वाराज्यदानपरितोषितनम्रबृन्दे ।
स्मेरास्यकान्तिपरिधूतसुधांशुबिम्बे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ३१ ॥

कारुण्यसागरनिमग्नहृदम्बुजाते
लावण्यजन्मसदनीकृततनैजदेहे ।
कारुण्यनित्यविहृतेर्निलयाङ्गसौधे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ३२ ॥

श्रीशेशपद्मजमुखामरपूजिताङ्घ्रे
श्रीबोधदाननिरते प्रणमज्जनेभ्यः ।
श्रीकण्ठसोदरि कृपामृतवारिराशे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ३३ ॥

पूर्णानदीतटविहारविलोलचित्ते
तूर्णानतेष्टततिदाननिबद्धदीक्षे ।
चूर्णायिताखिलचिरात्तहृदन्धकारे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ३४ ॥

वैराग्यजन्मनिलयैः परिसेव्यमाने
वैयासिकप्रमुखमौनिजनैर्नितान्तम् ।
सच्चित्सुखात्मकतनो विधिपुण्यराशे
श्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ३५ ॥

यां वेत्तुमिच्छति मखानशनाद्युपायै-
    र्लोके द्विजावलिरसौ बहुपुण्यपाकात् ।
सोपायहीनमपि नैजकृपातिरेका-
    च्छ्रीशारदाम्ब सितचित्तमिमं कुरुष्व ॥ ३१ ॥

इति श्रीशारदाम्बास्तोत्रमालिका संपूर्णा ॥



॥ श्रीः ॥

श्रीकालटिक्षेत्रे

# ॥ श्रीशारदास्तवकदम्बम् ॥



हेलया रचितचित्रविष्टपां
चेलधूतशरदभ्रविभ्रमाम् ।
कालटीपुरनिवासदीक्षितां
कालकालसहजां नुमो वयम् ॥ १ ॥

नास्तिक्यबुद्धिहतमानसवारिजातां-
स्त्यक्तात्मकर्मनिचयान्बहुशो द्विजाद्यान् ।
कृत्तोत्तमाङ्गजततीन्विनिरीक्ष्य दुःख-
वार्धौ निमग्नमिममम्ब सुखे नियुङ्क्ष्व ॥ २ ॥

ईशोऽस्ति जन्म विचित्रतरं हि जन्तो-
र्लोकान्तरं च निजकर्मकृतां सुखापम् ।
पापानि पापफलदाश्च तथैव लोका
इत्यम्ब लोकततये वितराशु बुद्धिम् ॥ ३ ॥

ब्रह्मास्ति सत्यमथ दृश्यमिदं हि मिथ्या
रज्जूरगादिवदतो न हि सौख्यलेशः ।
तस्मादिति प्रवितराम्ब दृढां मनीषां
नम्रालयेऽतिसुखमाप्स्यति येन शीघ्रम् ॥ ४ ॥

या शृङ्गशैलशिखरे यतिरूपधर्त्रा
संस्थापितापि गिरिजापतिना पुरा सा ।
कालव्यभिख्यविषयेऽपि मयार्थिता त्वं
वासं कुरुष्व जगतामवनाय वाणि ॥ ५ ॥

नाकाधिराजमुखलेखवरार्चितायै
राकाशशाङ्कनिभवस्त्रविभूषितायै ।
मूकालयेऽपि तरसा कविताप्रदाया
एकाजपुण्यततये तनुमो नमांसि ॥ ६ ॥

सरस्वति सरस्वति प्रपतितानबोधाह्वये
शरीरजमुखाख्यषण्मकरतोऽतिसंभीषणे ।
षडूर्मिसहिते जनान्करुणया तु निर्व्याजया
समुद्धर समुद्धर द्रुहिणपुण्यराशे जवात् ॥ ७ ॥

मुद्रापुस्तकमालिकामृतघटभ्राजत्कराम्भोरुहे
विद्राव्याशु चिरात्तमान्ध्यमखिलं दुस्त्याज्यमन्यैर्जनैः ।
शीघ्रं तत्त्वमसीति बोधमचलं दत्त्वा कृपावारिधे
वाणि त्वच्चरणारविन्दशरणं शुद्धान्तरङ्गं कुरु ॥ ८ ॥

किं ब्रूषे वचसां सवित्रि जनतानास्तिक्यबुद्धिर्ध्रुवा
कालात्तिष्ययुगान्न चान्यथयितुं शक्येति किं सुष्ठु तत् ।
कालाखर्वमनःसमुन्नतिहरश्रीशंभुसोदर्यपि
त्वं भूत्वा कथमद्य कालकलितं दौःस्थ्यं ब्रवीष्यम्बिके ॥

यस्माज्जडानुग्रहदीक्षितस्य
शंभोः स्वसारं भवतीं वदन्ति ।
तस्मात्स्वसृत्वं गिरिशस्य सार्थं
कुरुष्व शीघ्रं मम धीप्रदानात् ॥ १० ॥

आजन्मनस्तेऽङ्घ्रियुगं गतानां
चित्तं सितं चेत्प्रकरोषि वाणि ।
चित्रं न तत्तन्मलिनाग्रगण्यं
मत्कं सितं कुर्वरमम्ब चित्तम् ॥ ११ ॥

सांनिध्यमस्मिन्कुरु मूर्तिवर्ये
चिरं कृपातो जगदम्ब वाणि ।
प्रवर्तयासेतुतुषारशैलं
सद्धर्ममेनं जगतां हिताय ॥ १२ ॥

सन्ध्यादिकर्माण्यपि हा विहाय
रात्रिंदिवं स्वोदरपूरणेच्छून् ।
नरानिमान्पापभयेन शून्या-
न्सतो विधायाश्वव वाक्सवित्रि ॥ १३ ॥

मालासुधाकुम्भविबोधमुद्रा-
विद्याविराजत्करवारिजाताम् ।
अपारकारुण्यसुधाम्बुराशिं
श्रीशारदाम्बां प्रणतोऽस्मि नित्यम् ॥ १४ ॥

समागतोऽध्येतुमयं ध्वनिं किं
कीरार्भकस्त्वत्करपद्मसंस्थः ।
तवाधरे बिम्बधियात्तुमम्ब
समागतो वा वद धातृजाये ॥ १५ ॥

वाणि पाणिजितरक्तपयोजे
शोणिताम्बरधरेऽधरकान्त्या ।
पाणिना धरसि किं शुकमेनं
प्राणिबोधनकृतेऽखिलगुप्तेः ॥ १६ ॥

शारदाम्बुदसमाननिजाभां
नीरदाभकचसंहतिरम्याम् ।
पारदां लघु भवाख्यपयोधेः
शारदाम्ब कलयामि तनुं ते ॥ १७ ॥

बालचन्द्रपरिचुम्बितशीर्षां
लीलयैव परिरक्षितलोकाम् ।
नीलनागसदृशाकृतिवेणीं
शीलयामि हृदये विधिकान्ताम् ॥ १८ ॥

इति श्रीशारदास्तवकदम्बं संपूर्णम् ॥



॥ श्रीः ॥

जैत्रयात्रां निर्वर्त्य श्रीशृङ्गगिरिप्रवेशकाले

# ॥ श्रीशारदास्तुतिः ॥



दूरीकृत्य परीक्षणस्य करणं किं ते गिरां देवते
युक्तं वर्षचतुष्टयोपरि कियद्दत्तान्कृपावारिधे ।
मन्दो मत्पदयुग्मविरहं सोढुं न शक्नोत्ययं
कंचित्कालमपीति पद्मजसखि ज्ञात्वापि मातर्भृशम् ॥

यद्यप्यम्ब सरोजयोनिदयिते लोकानशेषानपि
श्रद्धाभक्तियुतान्विधाय नितरां कार्याणि सर्वाण्यपि ।
दुःसाध्यान्यपि लोकसन्ततिबहुश्रेयस्कराण्यादरा-
त्संपूर्णान्यकरोत्तथापि पदयोर्दूरं न सोढुं क्षमः ॥ २ ॥

त्वत्पादाम्बुजयोः कदापि विरहो मा भूदितो वा गिरां
मातर्नम्रजनावनव्रतधरे कारुण्यवारांनिधे ।
चेन्मय्यस्ति कृपा मनोरथततिं संपूरयात्रैव मे
दुःसाध्यामितरैरशेषजनताश्रेयस्करीं शारदे ॥ ३ ॥

मन्तूनां ततिरस्ति च प्रभवति स्यादेव चाग्रे मम
प्रालेयोस्रशिशूत्तमाङ्गसहजे संदेहगन्धोऽपि न ।
तस्याश्चेद्गणनां करोषि हृदया त्वं चापि मातस्तदा
निर्व्याजा करुणा निराश्रयतया कुत्रापि लीना भवेत् ॥

सरस्वति कृपानिधे सरसिजासनप्रेयसि
प्रणम्रजनपालिनि प्रचुरबोधसंदायिनि ।
समस्तसुकलास्वपि प्रसृतबोधमेनं जवा-
त्सुरासुरनमस्कृते कुरु करात्तचिन्मुद्रिके ॥ ५ ॥

कामं सन्तु सुरा निजाङ्घ्रिकमलासक्तान्तरङ्गान्दिवा-
रात्रं पूजनदेहदण्डनपरान्पातुं चिरायाम्बिके ।
नाहं तत्पदपङ्कजानुसरणं कर्तुं समर्थो गिरां
मातस्त्वत्पदमेव सत्वरमनोऽभीष्टप्रदं संश्रये ॥ ६ ॥

वाणीसिन्धुसुतागिरीन्द्रतनयारूपाणि धृत्वा पुरा
देवानां परिरक्षणं त्रिजगतामप्यादराद्याकरोत् ।
सा त्वं संप्रति शृङ्गशैलनिलया श्रीशारदम्बाभिधां
धृत्वा श्रोत्रमनोहरां प्रकुरुषे लोकावनं सादरम् ॥ ७ ॥

मूकानामपि वाग्विधानचतुरा यस्याः पदाम्भोजयोः
कादाचित्कनमस्क्रिया भुवि भवेच्छ्रीशारदे निश्चितम् ।
तां त्वामङ्घ्रिसरोजनम्रजनतासंरक्षणैकव्रतां
दृष्ट्वा तृप्तिमहो कदापि न भजेतां मे ध्रुवं चक्षुषी ॥ ८ ॥

ज्वालामालिनिकाविनिर्मितशुचिप्राकारमध्यस्थिते-
त्याह्वां नम्रजनस्य किं प्रथयितुं ज्वलावलीमध्यतः ।
सुस्थाया अपि नैव वह्निजनिता बाधा भवेदित्यहो
चित्रं कौतुकतः प्रदर्शितवती वाचां परा देवते ॥ ९ ॥

अग्नावग्नेः प्रवृत्तिर्न हि भवति कदापीति वातात्मजोक्तिं
प्रत्यक्षीकर्तुमेवानतजनविततेर्वाणि शृङ्गाद्रिवासे ।
अत्युग्राप्पित्तकीलास्थिततरुमयवेश्मस्थितामात्ममूर्तिं
मल्लीपुष्पादियुक्तामपि तनुवसनां कीटयुक्तामरक्षः ॥

प्रोक्तं केनागमान्ते किमु परममहःसंनिधौ स्वस्वकार्या-
शक्ता देवा बभूवुः शुचिपवनमुखा इत्यमुं मुख्यमर्थम्
जानन्त्वात्माङ्घ्रिनम्रा इति विधिरमणी दारुगेहे स्थितासी-
ज्ज्वालामालाकुलेऽस्मिन्सुमवसनयुता दाहगन्धेन शून्या

लोकानामवनार्थमादिगुरुणा संस्थापिताहं पुरा
भूस्थानामपि तान्प्रमत्तहृदयान्नैव त्यजामि क्वचित् ।
आत्मानात्मविवेकमुख्यसुगुणान्दत्त्वा दृढान्संततं
रक्षामीति विबोधनाय विहितं चित्रं गिरां देवते ॥ १२ ॥

स्मृत्वा संयमिचक्रवर्तिरचितां त्वं प्रार्थनां शारदे
सृष्टे स्वेन जगत्यहेतुककृपामालोच्य नैजां मुहुः ।
देवागारविनिर्मितेस्तु समये प्राप्तामशुद्धिं परां
सोढ्वा संनिधिमातनोतु भवती वाचां परा देवता ॥

माता पुत्रकृतामशुद्धिविततिं सोढ्वा पुनः शारदे
ह्युत्सङ्गे विनिवेश्य लालनमहो यद्वत्करोत्यादरात् ।
त्वं माता जगतां तथैव बहुधा जातामशुद्धिं मुहुः
सोढ्वा संनिधिमातनोतु भवती वाचां परा देवता ॥

इति श्रीशारदास्तुतिः संपूर्णा ॥



॥ श्रीः ॥

श्रीशृङ्गाद्रौ श्रीशारदानवरात्रोत्सवसमये

# ॥ श्रीशारदास्तोत्रम् ॥



रत्नावलीनिर्मितशैलशृङ्ग-
विभ्राजदापूर्णसुधाकराभम् ।
आकण्ठरक्ताम्बरसंवृताङ्गया
मुखाम्बुजं भाति जगज्जनन्याः ॥ १ ॥

आकण्ठमानम्रजनानुरागो
ममेति लोकस्य विबोधनाय ।
आकण्ठरक्ताम्बरसंवृताङ्गी
पद्मोत्थजाया प्रविभाति नूनम् ॥ २ ॥

एवं सर्वजगन्त्य-
प्युत्सङ्गे संनिधाय रक्षामि ।
इति बोधनाय जगता-
मङ्के बालं दधासि मातस्त्वम् ॥ ३ ॥

शिशुमिव पदनतलोकं
परिरक्षामीति बोधनायैव ।
अङ्के निधाय बालं
भातीयं पङ्कजातभवदयिता ॥ ४ ॥

स्थालीपुलाकाख्यनयेन मात-
र्जगन्ति सर्वाण्यपि पालयामि ।
इत्येतदर्थस्य विबोधनाय
बालं निजाङ्के विदधासि किं त्वम् ॥ ५ ॥

एकमेवाम्बरं वाणि
विरूपं च वदन्ति हि ।
नवाम्बराणि धत्से त्वं
सुरूपाणि कथं वद ॥ ६ ॥

आकाशवत्सर्वगतश्च नित्य
इत्यादि वेदेऽम्ब किलाम्बरस्य ।
प्रत्नत्वमेकत्वमपि प्रसिद्धं
कथं नवत्वं समभूदमुष्मिन् ॥ ७ ॥

पुराणवस्त्राणि न धारयामि
 नवाम्बराण्येव तु धारयामि ।
इति प्रबोधाय जनस्य नूनं
 नवाम्बराण्येव दधाति वाणी ॥ ८ ॥

भवन्तु विजरामराः पदसरोजनम्रा इति
 प्रकृष्टदयया विधेः सखि सरोजतुल्यानने ।
करस्थकलशामृतं नतजनाय दातुं स्वयं
 महार्हमणिनिर्मितं चषकमम्ब धत्से किमु ॥

त्यक्ष्यामि नैव रागं
 कालत्रितयेऽपि नम्रवर्गेषु ।
इति बोधनाय वाणी
 रक्तसुमानां त्रयं धत्ते ॥ १० ॥

हंसैरेव परैः सेव्या
 नाहमन्यैर्जनैरिति ।
प्रबोधनकृते मात-
 र्हंसं वाहं करोषि किम् ॥ ११ ॥

हंसे हि शब्दे किमु मुख्यवृत्त्या
स्थिताहमेवेति विबोधनाय ।
विभासि हंसे जगदम्बिके त्व-
मित्यस्मदीये हृदये विभाति ॥ १२ ॥

हंसोऽप्यहंस इति बोधमवाप्य मुक्तिं
प्राप्तः परस्तव पदाम्बुजसंश्रयाद्यत् ।
तस्मात्तवाम्ब पदयुग्ममयं मुमुक्षु-
र्हंसः समाश्रयति वाहनतामवाप्य ॥ १३ ॥

विरिञ्चिहृदयाम्बुजप्रमददानसूर्यप्रभे
विचित्रगतिचातुरीप्रथितपादपङ्केरुहे ।
करोति किमयं सदा गमनचातुरीप्राप्तये
मरालकुलनायकस्तव पदाब्जसेवां मुदा ॥ १४ ॥

हंसो बाह्यान्धकारप्रदलनचतुरो ह्यह्नि मोदप्रदायी
पद्मानामेष मेऽन्तःस्थिततिमिरततेर्वारयित्र्याश्च रात्रौ ।
अप्यामोदप्रदात्र्या नतहृदयसरोजातपङ्केरधस्ता-
द्भूतो हीत्येव बोधं रचयितुमिव किं हंसमारोहसीशे ॥

कर्तुमात्मनि सार्थां किं
वृषेन्द्रः पुर एतु नः ।
इत्यादिकां श्रुतिं वाणि
पुरस्तात्कुरुषे वृषम् ॥ १६ ॥

वृषभो वृषभो नो चे-
त्कथं तव पदाम्बुजम् ।
वाणि सेवितुमर्हः स्या-
त्तस्माद्वृषभ एव हि ॥ १७ ॥

वृषं पुरस्तात्कुरुषे किमद्य
वृषप्रदानाय नमज्जनेभ्यः ।
द्रुतं पयोजन्मभवप्रमोद-
पयोधिराकाशशिबिम्बपङ्क्ते ॥ १८ ॥

पशुपः शिवोऽयमिति तं
विहाय किं वाक्त्वतिप्रदामाशु ।
पशुतानिवृत्तयेऽयं
वृषभस्त्वां सेवते मातः ॥ १९ ॥

शार्दूलचर्म परिवीक्ष्य भवाङ्गसंस्थं
भीतः पलाय्य तव संनिधिमागतः किम् ।
उक्षाधिपः सरसिजासनधर्मपत्नि
ब्रूह्यद्य संशयनिमग्नमतेर्ममाशु ॥ २० ॥

पुनरुपनयनं पुंसो
वृषाधिरोहे न कामिन्याः ।
दर्शयति तत्त्रियोऽपि हि
वृषभारूढा त्रिनेत्रेयम् ॥ २१ ॥

नीलकण्ठस्य सार्वज्ञ्य-
मूलं त्वत्पादसेवनम् ।
इति संबोधयन्नील-
कण्ठस्त्वां सेवते किमु ॥ २२ ॥

शिखी मुण्डी जटीत्याद्याः
सर्वे त्वत्सेवका इति ।
द्योतनाय शिखी किं वा
मातस्त्वामेव सेवते ॥ २३ ॥

निशम्य संप्रेषितवान्मयूर-
मुद्धर्ष इत्येव पितृष्वसुः किम् ।
षडाननो ब्रूहि गिरां सवित्रि
नम्रस्य संदेहयुजो ममाशु ॥ २४ ॥

किं वर्णयामि तव सुन्दरतां मनुष्यो
यत्सुन्दरत्वमभिवीक्ष्य मयूरपक्षी ।
हित्वा विरूप इति षण्मुखमाशु मात-
र्वासं करोति तव पादसरोजमूले ॥ २५ ॥

दृष्ट्वा त्वदीयकचसंततिनीलमेघं
सर्वर्तुषूदयनमेत्य मयूर एषः ।
नित्यप्रहर्षदतया विरहासहिष्णु-
र्नूनं त्वदङ्घ्रिनिकटे स्थितिमातनोति ॥ २६ ॥

केका न पूजयेयुस्त्वां
भुवनेऽस्मिन्महोत्सवे वाणि ।
इति नाम्नैव हि वक्तुं
भाति त्वत्संनिधौ केकी ॥ २७ ॥

शिखिसूर्यचन्द्रमुख्या-
नहमेवास्थाय पालयामीदम् ।
जगदिति निबोधनार्थं
वागीश्वरि भासि शिखिनमास्थाय ॥ २८ ॥

शंभौ सन्ति शशाङ्कसूर्यशिखिनो नेत्रापदेशात्सदा
सागर्भ्यं त इमे निरीक्ष्य गिरिजानाथस्य मातस्त्वयि ।
वक्त्रारक्तपटीसुवाहमिषतः सेवां सदा कुर्वते
मोदादेव हि ते न चात्र विशयः कश्चिद्गिरां देवते ॥

केकातोऽपि मनोहरेण वचसा त्वन्निर्जितः केक्ययं
पादाम्भोजयुगं प्रपन्न इति मच्चित्ते विभात्यम्बिके ।
जेतुः पादयुगप्रपत्तिरथवा देशान्तरावस्थिति-
र्युक्तं चान्यतरज्जितस्य विबुधाः प्राहुर्यतो भारति ॥

शिखिवच्छुद्ध एवेति
नाम्नैवाह यतः शिखी ।
तस्मात्त्वद्वाहता चास्य
युक्तैव विधिवल्लभे ॥ ३१ ॥

मुक्ताहारमिमं जगज्जननि ते शुभ्राहिबुद्ध्या किमु
ग्रीवास्थं ह्ययमग्रहीद्भुजगभुग्भोक्तुं ततो लब्धधीः ।
नायं सर्प इति स्वमोहमधुनापह्नोतुमेवात्यज-
न्नैवालंकृतिलक्ष्यतः परमहो धत्ते बुधः पूर्ववत् ॥ ३२ ॥

आद्या मत्स्यमयी तनुर्मधुरिपोः कौर्मं द्वितीयं वपु-
स्तद्युग्मं त्वमिहाम्ब नेत्रपदयोर्व्याजेन धत्से यतः ।
तस्माच्चक्रयुगं तवोरसि कुचव्याजेन भात्यम्बिके
तस्मादेव खगेश्वरश्च सततं त्वां सेवते मोदतः ॥ ३३ ॥

विष्णौ वीक्ष्य जडाधिवासमथ च स्वामित्रशायित्वम-
प्यण्डोद्भूतपतिर्विहाय तमिमं विज्ञानरूपामयम् ।
त्वामेवाद्य निषेवते खलु मुदा वाग्देवि युक्तं च त-
त्को वा शत्रुसहासिकां हि सहते लोकेषु विद्वज्जनः ॥

भूताकाशचरेद् त्वमेव भुवने सिद्धं हि का तेन मे
वृद्धिश्चाभवदित्यवेत्य खगराण्णूनं गिरां देवते ।
हार्दाकाशचराधिपत्यमपि मे भूयादितीच्छावशा-
त्तत्प्राप्त्यै तव पादपङ्कजयुगीसेवां करोत्यादरात् ॥ ३५ ॥

विनतातनूद्भवत्वं
प्रकटं प्रभवेद्दिनत्यैव ।
इति बुद्ध्या खगराट् किं
विनतस्त्वत्पादपद्मयोर्वाणी ॥ ३६ ॥

मानसविहरणशीलां
देवीं त्यक्त्वान्यदेवतासेवा ।
नैवोचितेति खगरा-
ड्वहति त्वां तादृशी नूनम् ॥ ३७ ॥

सुवर्णनीकाश भवत्प्रतीक-
कान्तेः परिष्वञ्जन एव सार्था ।
सुपर्णतेत्यात्मन आकलय्य
खगेट् करोत्यम्ब तवाङ्घ्रिसेवाम् ॥ ३८ ॥

आगत्य कालाहिधिया हि वेणी
गृहीतुकामः खगराण्णिरीक्ष्य ।
निह्नोतुमिच्छत्ययमम्ब नैजां
भ्रान्तिं त्वदङ्घ्रेः परिसेवनात्किम् ॥ ३९ ॥

लोके ह्येकः पक्षः
　शुक्लश्चान्यश्च कृष्ण एवेह ।
द्वावपि शुक्लौ पक्षौ
　धत्ते गरुडः किमम्ब तव वाहः ॥ ४० ॥

हस्तान्तरस्थपरशुं
　शंभोर्भूषार्थमागतान्नागान् ।
दृष्ट्वा भीतो हरिण-
　श्चरणं शरणं जगाम तव वाणि ॥ ४१ ॥

धत्ते कुरङ्गं विधुरेष पूर्णो
　मदास्यचन्द्रस्तमधः करोति ।
इत्येतयोर्भेदविबोधनाय
　कुरङ्गमम्ब त्वमधः करोषि ॥ ४२ ॥

समाश्रयेयं यदि पुष्करस्थ-
　मब्जं तदा स्यात्पतनं हि दर्शे ।
ममेति मत्वा मृगशावकोऽयं
　पदाब्जमेवाश्रयते तवाम्ब ॥ ४३ ॥

शुक्लादौ शशिनं स्वकीयशरणं पूर्णं विचिन्वन्मृगो
वाण्यास्यं तव वीक्ष्य हृष्टहृदयः पूर्णो मया चन्द्रमाः ।
प्राप्तश्चेति तवाङ्घ्रिसंनिधिमसावागत्य वेगात्ततो
नास्मिन्नास्ति ममावकाश इति किं तिष्ठत्ययं भारति ।

पुरा तव पदाम्बुजं हरिण एष संपूज्य यो
जगत्प्रभुशिरःस्थिते शशिनि संस्थितं प्राप्तवान् ।
किमद्य हृदि संस्मरंस्तव पदाब्जसेवाफलं
महोत्सवदिदृक्षया चरणसंनिधिं प्राप्तवान् ॥ ४९ ।

पिबेयुरपि मां सुरा यदि वसामि चन्द्रे तदे-
त्यपायरहितं पदं जिगमिषुश्चिरं संचरन् ।
अपायवचनोज्झितं तव पदाब्जयोरन्तरं
विलोक्य मृगशावको वसति तत्र वाग्देवि किम् ॥

भक्ताज्ञानमहेभा
मद्वाहनसंनिरीक्षणादेव ।
निर्यान्त्विति सहसा किं
सिंहं वाहं करोषि मातस्त्वम् ॥ ४७ ॥

लालयति वाणि किं त्वां
   पञ्चास्यः स्कन्धमारोप्य ।
युक्तमिदं भ्रातॄणां
   सोदर्यालालनं लोके ॥ ४८ ॥

विष्ण्वर्धत्वात्पालकत्वं ममास्ते
   संहर्तृत्वं नैजमेवास्ति किं तु ।
स्रष्टुर्भावो वाणि नास्तीति मत्वा
   तत्प्राप्त्यै त्वां सेवते पञ्चवक्त्रः ॥ ४९ ॥

तवाम्बराभावशशीयशृङ्ग-
   नीकाशमध्यत्वमयं निशम्य ।
वलग्नकार्श्याध्ययनाय किं वा
   पदाब्जसेवां विदधाति सिंहः ॥ ५० ॥

नताय पादाम्बुजयोर्जनाय
   राजाधिराजत्वविधित्सया किम् ।
सिंहासनं त्वं वद दातुमम्ब
   सिंहं सदा संनिधिगं करोषि ॥ ५१ ॥

वने जातः सिंहः पुनरपि दरीवासनिरतः
स्वसाम्यं यत्र स्यात्सततवसतिं तत्परिसरे ।
चिकीर्षन्भ्रान्त्या किं तव पदवनेजे नतमनो
गुहावासे दृष्ट्वा वसतिमकरोत्तत्परिसरे ॥ ९२ ॥

नाथस्यापि ममानिवेद्य हरिणः सेवां कथं प्रातनो-
द्वाग्देव्याश्चरणाब्जयोरिति रुषा सारङ्गबालं भृशम् ।
कृत्वा शीघ्रपलायनोत्सवपरं सेवां करोत्यादरा-
दस्येशः स्वयमित्यवैमि करुणावारांनिधे शारदे ॥

कुरङ्गवेगस्तव दृष्टपूर्व-
स्तुरंगवेगं परिपश्य वाणि ।
इतीव गर्वादधिगम्य मात-
स्तुरंगमस्त्वां परिसेवते किम् ॥ ९४ ॥

तुरंगवच्चञ्चलमम्ब चित्तं
बद्ध्वा दृढं भक्तिगुणेन शीघ्रम् ।
स्थिरं करोमीति गुणैस्तुरंगं
नियम्य किं बोधयसे जनांस्त्वम् ॥ ९९ ॥

त्वमश्वपूर्वां श्रियमानताय
　ददामि तूर्णं त्विति बोधनाय ।
तुरंगमग्रे विदधासि मात-
　रितीव मन्ये वद किं तथैव ॥ ५६ ॥

उन्नम्य पादद्वितयं तुरंगो
　वदन्नितीवास्ति गिरां सवित्रि ।
विलङ्घयतां किं सरिदीश्वरोऽय-
　मुत्प्लुत्य गच्छेयमथाम्बरं वा ॥ ५७ ॥

पदे पदे दानववश्यता मे
　भवेच्छचीनाथसमीपवासे ।
उच्चैःश्रवा इत्यधिगम्य मात-
　स्त्वदङ्घ्रिसेवां प्रकरोति किं वा ॥ ५८ ॥

अश्वो वाहनतां न याति दिविषद्वृन्दस्य वेदा इति
　प्राहुस्तं च निशम्य रोषसहितस्त्वत्संनिधिं प्राप्य किम् ।
मिथ्या कर्तुमहो तदीयवचनं देव्यास्तवाम्बानिशं
　वाहत्वं कुतुकी जगाम तुरगाधीशो गिरां देवते ॥

विहङ्गं कुरङ्गं तुरंगं च वाहं
   विधायाशुगं भ्रान्तिमासाद्य किं त्वम् ।
गजं मन्दगं वाहमद्यातनोषि
   प्रणम्रस्य मे ब्रूहि वाचामधीशे ॥ ६० ॥

नतेष्टदानाय सदा जलार्द्र-
   कराम्बुजा त्वं यत एव वाणि ।
तस्मादिभोऽप्येष तवाङ्घ्रिसङ्गा-
   द्दानाम्बुसंसिक्तकरो विभाति ॥ ६१ ॥

केचित्प्राहुरनैपुणास्तु कुचयोः साम्यं हि कुम्भस्थले
   शुण्डायामथवोरुतौल्यमिभराडिच्छंस्तवागादिति ।
नैतत्संभविता तनौ कठिनता यस्मात्ततः शारदे
   मन्ये ह्युत्सवसेवनाय हरिणा संप्रेषितः स्यादिति ॥

मम कौशिकवाहनता
   भवेद्धर्यश्वस्य सेवने किमिति ।
शुक्रेभस्तव वाहः
   समभून्मातर्न संदेहः ॥ ६३ ॥

जम्भारौ कौशिकत्वं ह्यथ च तदनुजे वीक्ष्य सम्यग्घरित्वं
त्यक्त्वा ह्रीसाध्वसाभ्यामयमिभकुलराट्टौ शरच्चन्द्रशुभ्रः ।
इन्द्रोपेन्द्रादिसेव्यामपि सकलसुराराध्यपादारविन्दां
त्वामेवातिप्रमोदात्कमलजदयिते सेवते नूनमेतत् ॥ ६४ ॥

मत्पादाब्जप्रणम्रं नरमतितरसा सेवते चेभमुख्या
लक्ष्मीर्हस्ताग्रराजद्वरकनकमयस्रग्धरेत्येव बोधम् ।
कर्तुं हस्ताग्रराजद्वरकनकसरं नागराजं प्रधत्से
वाणि प्रब्रूहि किं त्वं कमलजहृदयाम्भोजसूर्यप्रभे मे ॥

एकः शुकः प्रसिद्धोऽस्ति
पाराशर्यसुतः किल ।
शुकोऽपरस्तु को ब्रूहि
शारदे प्रणताय मे ॥ ६६ ॥

एकं शरीरं परिगृह्य पूर्व-
भवे शुकोऽयं कृतवान्विचारम् ।
मोक्षाय नालं स इतीह देह-
द्वयं गृहीत्वा किमु सेवते त्वाम् ॥ ६७ ॥

दन्तेषु किं दाडिमबीजबुद्ध्या
तवाधरे बिम्बधियाथवायम् ।
शुकः कुतस्त्वन्निकटे चकास्ति
संदेहयुक्ताय वदाशु मातः ॥ ६८ ॥

श्रुत्वा तवाम्ब निनदं किल कीरडिम्भः
कण्ठे तवास्ति शुक इत्ययमाकलय्य ।
इच्छन्विनिर्गमनमस्य बहिस्तवाद्य
हस्ताम्बुजे स्थिरतया वसतीति मन्ये ॥ ६९ ॥

क्षुधातुरः कश्चन कीरडिम्भ-
स्तृषार्दितोऽन्यश्च तयोर्हि मातः ।
एकस्तु कर्णोत्पलमत्तुमिच्छ-
त्यन्यः करस्थामृतपानकामः ॥ ७० ॥

पादनम्रपुरुषान्कि
बोधयितुं लज्जया गिरां देवि ।
अपिधाय नैजरूपं
धत्से पुरुषाकृतिं ब्रूहि ॥ ७१ ॥

प्रसवित्र्यां हि सुतानां
नैव भवेत्साध्वसं कदाचिदपि ।
मत्वेति बोधनकृते
गुरुवररूपं दधासि किं मातः ॥ ७२ ॥

सर्वात्मकत्वमथवा
बोधयितुं स्वस्य सर्वलोकानाम् ।
स्वीकुरुषे किं पौरुष-
मम्बुजसंजातमानिनि ब्रूहि ॥ ७३ ॥

झषौ स्वजातिदोषं कि-
मबलस्वकुलाशनम् ।
मातर्निवेदनायाक्षि-
व्याजात्कर्णसमीपगौ ॥ ७४ ॥

अशक्नुवन्स्तोतुमहीश्वरस्त्व-
न्मुखस्य सौन्दर्यमयं जगाम ।
रसातलं वक्त्रसहस्रतां च
निनिन्द कंजातभवस्य जाये ॥ ७५ ॥

अशक्नुवन्तस्तव सुन्दरत्वं
स्तोतुं महेशाग्निभवाब्जजाताः ।
निनिन्दुरास्येषु हि पञ्चकत्वं
षट्कं चतुष्कं च गिरां सवित्रि ॥ ७६ ॥

नीलोत्पलोत्थः खलु नीलमेघो
नम्रास्यमध्यात्कविताप्रवाहम् ।
प्रवर्तयत्याशु वदन्ति चैनं
मातस्तवाक्षिप्रभवं कटाक्षम् ॥ ७७ ॥

नीलोत्पले त्वन्नयने हि मात-
स्तदुत्थमेघः करुणाकटाक्षः ।
स नम्रवक्त्रात्कविताप्रवाहं
प्रवर्तयत्याशु न संशयोऽत्र ॥ ७८ ॥

माला विभात्यम्ब तवाद्य कण्ठे
क्वचिच्च रक्ता क्वचिदच्छवर्णा ।
बिम्बाधरस्य प्रभया हि नासा-
मणेश्च कान्त्येति वितर्कयामि ॥ ७९ ॥

अक्षीणो नतचित्तसंस्थिततमोनिर्वापणेऽपि क्षम-
श्चाङ्केनाप्ययुतस्तवास्यरजनीनाथो गिरां देवते ।
क्षीणेनाङ्कयुजा बहिःस्थिततमोमात्रापनोदक्षमे-
णाब्जेनायमहो कथं स लभतां साम्यं जगन्मातृके ॥

देवानामनिमेषताद्य सफला जाता तवाम्बानिशं
वक्त्राब्जस्य निरीक्षणात्सुरपतेस्तद्वत्सहस्राक्षता ।
गौरीशस्य दशाक्षता कमलजस्याष्टाक्षता भारति
क्रौञ्चारेर्द्विषडक्षतापि फलयुग्जातेति जानीमहे ॥

अस्याब्जस्य समाश्रये मम भवेन्मोदो रजन्यां परं
नैवाह्नीत्यत एव चम्पकसुमेनालोच्य नीलोत्पले ।
सेवेते तव वक्त्रपद्ममनिशं नेत्रापदेशान्मुदा
रात्रौ वासरमध्यमेऽपि सुखदं वाग्देवि न द्वापरः ॥

चन्द्रः सौहार्दमिच्छंस्तव मुखशशिना प्राप्य वृद्धिं वलक्षे
पक्षे प्राप्येषदम्ब प्रहर्षितहृदयश्चाभवत्पूर्णिमायाम् ।
दृष्ट्वाथ त्वन्मुखेन्दुं मृगशिशुरहितं स्वं च चिह्नेन युक्तं
लज्जायुक्तस्ततोऽयं प्रतिदिवसमहो क्षीणतां याति कृष्णे ॥

दृष्टं वाग्देवताया वदनसरसिजं येन भूमौ कदाचि-
च्छृङ्गाद्रौ तस्य वक्त्रात्सरसपदयुता वाक्ततिर्निःसरेद्धि ।
नीहाराद्रेर्गुहातः सुरवरतटिनी यद्वदाश्वप्रयत्ना-
न्निर्गच्छत्येव तद्वन्न हि खलु विशयोऽस्माकमत्रास्ति कश्चित् ।

एकापि नानाविधरूपधर्त्री-
त्येतादृशार्थस्य विबोधनाय ।
वेण्यां भुजंगी नयने कुरङ्गी
मध्ये च सिंही प्रतिभासि किं त्वम् ॥ ८५ ॥

कम्बौ पद्मं भाति बिम्बं हि तस्मि-
न्मल्लीपङ्क्तिश्चापि नीलोत्पले द्वे ।
सर्वं ह्येतद्भाति हैम्यां लतायां
शैले चास्मिन्पश्यतैतद्विचित्रम् ॥ ८६ ॥

विराजते कश्चन वारिराशि-
र्मीनेन युक्तो न हि कम्बवोऽत्र ।
कम्बूपरिस्थस्त्वयमेव मातः
सनेत्रमास्यं तव चैनमाहुः ॥ ८७ ॥

अकलङ्कः किमु चन्द्रः
किं वा सद्यः प्रफुल्लमम्बुभवम् ।
सौन्दर्ययुतवपुष्म-
द्वक्त्रं किं वा तवाम्ब न हि जाने ॥ ८८ ॥

भुजगी वा तव वेणी
किं वा करपद्मपुष्परसलोभात् ।
आगतमधुलिट्पटली
जानीमो नैव विधिकान्ते ॥ ८९ ॥

नागेन्द्रकुम्भावुत हेमकुम्भौ
किमम्ब कोकौ तव किं कुचौ वा ।
विवेक्तुमत्रास्ति न नोऽद्य शक्ति-
स्त्वमेव मातर्वद धातृजाये ॥ ९० ॥

पयोजौ कूर्मौ वा सुरवरशिरोभूषणमणी
तरू वा कल्पाद्यौ नतजनचयाभीष्टवरदौ ।
पदे वा मातस्ते न तदिति विवेक्तुं हि विभवो
वयं तस्माच्छीघ्रं वद कमलजातप्रियतमे ॥ ९१ ॥

निर्गत्य शैलमध्या-
त्कुहरं काचिद्गता भुजगी ।
तां शंसन्ति हि सुधियो
मातस्तव नाभिरोमालिम् ॥ ९२

सरस्या जातेयं न हि खलु कलिन्दाख्यगिरितः
समुद्रं नो याता ह्यपि तु वरशैलद्वयगता ।
विभातीत्थं काचित्त्वयि खलु गिरा देवि यमुना
वदन्त्येनां नाभिप्रसृततनुजालिं कविवराः ॥ ९३ ॥

किं तत्पयोजयुग्मं
रम्भास्तम्भौ ततो व्योम ।
तत्र सरः समृणालं
तदुपरि शैलौ ततः पयोजातम् ॥ ९४ ॥

दृष्टं वाग्देवते ते सरसिजयुगलं पादयुग्मं हि रम्भा-
स्तम्भावूरुद्वयं तत्तदुपरि गगनं मध्यभागो हि नूनम्
मन्ये नाभिः सरः स्यात्तदुपरि कलये रोमपङ्क्तिं मृणालं
शैलद्वन्द्वं कुचौ स्यात्तदुपरि कमलं त्वास्यमेवेति मन्ये

मां द्रष्टुमाकाशगतं हि मर्त्या
वक्त्रोन्नतेः क्लेशयुता भवेयुः ।
इतीव मत्वा धरणीं गतोऽय-
मम्बास्यलक्ष्यात्तत्र पूर्णचन्द्रः ॥ ९६ ॥

तवास्यलक्ष्याद्धरणीं गतस्य
सुधांशुबिम्बस्य निषेवणाय ।
मुक्तासराणां मिषतः समागा-
त्ताराततिर्वाग्जननीति मन्ये ॥ ९७ ॥

शारदे तव पदं प्रसमीक्ष्य
प्राप्तुमस्य सदृशत्वमहो किम् ।
कण्ठदघ्नसलिले प्रतिघस्रं
पङ्कजान्युरुतपः प्रचरन्ति ॥ ९८ ॥

शारदे तव पदाम्बुजयुग्मं
ये स्मरन्ति मनुजा भुविलोके ।
श्रीमतां च विदुषां धुरि गण्या-
स्ते भवन्ति न हि तत्र विचारः ॥ ९९ ॥

वाताहताब्धिलहरीततितौल्यभाजो
वाचः प्रयत्नमनपेक्ष्य मुखारविन्दात् ।
वादेषु यत्करुणया प्रगलन्ति पुंसां
वाग्देवता भवतु वाञ्छितसिद्धये सा ॥ १०० ॥

यस्त्वामिन्दुनिबद्धदिव्यमकुटां शुक्लाम्बरालंकृतां
मुद्रापुस्तकमालिकामृतघटान्संबिभ्रतीं ध्यायति ।
तस्यास्यात्सरसा सुवर्णघटिता सालंकृता वाक्तति-
स्तूर्णं निःसरति प्रयत्नरहिता निःसंशयं भारति ॥

अनायासादास्यादमरतटिनीपूरसदृशी
ततिर्वाचामाशु प्रसरति शिशोरप्यनुदिनम् ।
कृपालम्बापाङ्गे कृशतरवलग्नेऽकृशकुचे
न संदेह्यत्राहं सरसिजभवप्राणदयिते ॥ १०२ ॥

कदाचिदपि यो नरस्तव पदाम्बुजं भक्तितो
विभावयति शारदे हृदयपङ्कजे तस्य हि ।
व्रजेयुरपि दासतां नृपवरास्तथा वाक्ततिः
सुधाशितटिनीसखी वदनपद्मतो निःसरेत् ॥ १०३ ।

जडोऽपि जगदम्बिके तव कृपायुतं वीक्षणं
प्रपद्य सुरनायकं जयति सत्वरं संपदा ।
मुखाम्बुजनिरर्गलप्रविगलद्वचोवैखरी-
विनिर्जितसुरापगास्मयभरश्च संजायते ॥ १०४ ॥

शिवे त्वदङ्घ्रिपङ्कजप्रणम्रवाग्झरीजिता
तुषारशैलगह्वरं जगाम जह्नुकन्यका ।
ततस्ततोऽपि तावकप्रणम्रकीर्तितर्जिता
शिवस्य शैलकन्यका जटाख्यदुर्गमाविशत् ॥ १०५ ॥

के वा न कुर्युर्भुवि काव्यमम्ब
शब्दार्थविज्ञानयुजश्चिराय ।
चित्रं त्वदङ्घ्रिं परिसेवते यो
जयेत्स वाचस्पतिमाशु वाग्भिः ॥ १०६ ॥

पञ्चास्यषण्मुखचतुर्मुखनागराजाः
स्तोतुं न तेऽम्ब चरितं प्रभवन्ति किंचित् ।
एकाननः कथमहं तव शक्नुयां त-
त्स्तोतुं तथापि चपलं प्रसहस्व सूनोः ॥ १०७ ॥

यावद्वाचां सवित्रि प्रणतजनवचोदानबद्धादरे ते
पादाम्भोजं प्रणन्तुं कलयति धिषणां जन्ममूकोऽपि लोकः ।
तावद्देवेन्द्रदत्तप्रवरमणिगणाबद्धपीठस्य मध्या-
दुत्थायाशु प्रधावत्यमरगुरुरहो मामयं जेष्यतीति ॥१०८॥

मुक्ताहारमिषाज्जगज्जननि ते सेवां करोत्यादरा-
द्देवानां सरिदित्यहो मकरराडालोच्य सेवां स्वयम् ।
कर्तुं हारमिषेण कम्बुसदृशे कण्ठे विभातीति म-
च्चित्ते भाति पुनर्वदन्तु चतुराः किं तं न जानाम्यहम् ॥

पापीयानिति संजहासि करुणावारांनिधे शारदे
सर्वाघौघपयोधिबाडबशिखे त्वं मामनाथं यदि ।
तर्ह्येतादृशपापकोटिसहितं सर्वैश्च दूरीकृतं
को वा मां परिपालयेत्कमलजप्राणप्रिये ब्रूहि मे ॥

भक्तिहीन इति मां जहासि किं
मातरद्य जलजासनप्रिये ।
संत्यजन्तु भुवि तर्हि मातर-
स्तद्वदेव निजकुक्षिजान्सुतान् ॥ १११ ॥

विरिञ्चिहरिशंकरप्रभृतिनिर्जराभ्यार्चिते
प्रणम्रजडतातमस्ततिविभेदसूर्यप्रभे ।
नमत्सुरसतीकचप्रविलसत्प्रसूनस्रव-
न्मरन्दतटिनीप्लवत्पदसरोरुहे पाहि माम् ॥ ११२ ॥

ज्वरादिनिखिलामयान्करुणया गिरामम्बिके
निवारय विभावरीपतिसमानवक्त्राम्बुजे ।
स्वरादिभुवनाधिपप्रणतपादपाथोरुहे
करात्तसुधेऽनिशं दिश सुखं जनानां मुदा ॥

पद्मासनस्थे सरसीरुहोत्थ-
जाये वस त्वं हृदये सदा मे ।
तेनाहमाशाः सकला जयेयं
न तत्र संदेहलवोऽस्ति मेऽम्ब ॥ ११४ ॥

यं देववर्याः समुपासते हि
तं देहिनामिष्टदमाशु मातः
मन्देतराप्यं सुजडः कथं वा
विन्देयमङ्घ्रिं तव वाक्सवित्रि ॥ ११५ ॥

समस्तवस्तून्यपि सन्ति मात-
स्त्वत्संनिधौ किं तु न मन्मनोऽस्ति ।
तत्र प्रमाणं जनिरेव मेऽद्य
तदप्यतस्त्वं कुरु संनिधौ ते ॥ ११६ ॥

लोकप्रसिद्धाब्धिततेस्तु मान-
माहुर्द्विलक्षाधिकयोजनानि ।
नाद्राक्ष्म नाश्रैष्म भवत्कृपाब्धे-
र्मानं पयोजातभवस्य जाये ॥ ११७ ॥

न पूजिता त्वं कुसुमैर्मनोज्ञै-
र्न संस्तुता ह्यपदैश्च पद्यैः ।
न संस्मृता हृत्कमलेऽपि जातु
तथापि मातर्दयसे जनेऽस्मिन् ॥ ११८ ॥

नैवाहमानीय सुमानि दिव्या-
न्याराधनं तेऽकरवं कदापि ।
तथापि मातः सहजानुकम्पा-
युतैः कटाक्षैः परिपाहि मां त्वम् ॥ ११९ ॥

ये प्राणरोधप्रमुखान्प्रयत्ना-
न्कुर्वन्ति लोकाः स्वसमीहिताय ।
ते नैव जानन्ति परं प्रणामं
तवाम्ब कल्पद्रुमबद्धसख्यम् ॥ १२० ॥

अव्याजकारुण्यमयि प्रसीद
सुव्याहृतीनां ततिमाशु यच्छ ।
नव्यानि काव्यानि करोमि मातः
क्रव्यादवैरिप्रमुखामरेड्ये ॥ १२१ ॥

तिष्ये युगे सङ्घगता हि शक्ति-
रितीव सम्यक्परिचिन्त्य देव्याः ।
नासासदक्षत्वमहोऽधिगन्तुं
मालात्वमापुः खलु चम्पकानि ॥ १२२ ॥

चम्पककुसुमानि मात-
र्नूनं नासासदक्षतां गन्तुम् ।
सततं मालाव्याजा-
त्सेवन्ते पङ्कजातभवजाये ॥ १२३ ॥

अव जगदम्ब सदा मां
सवमुख्यकर्मभिस्तुष्टे ।
नवनवकवित्वदान-
प्रवणे कंजातजन्मसुकृतमयि ॥ १२४ ॥

करुणापूरितनयने
वरुणादिदिगीशसेव्यपदपद्मे ।
अरुणाधरजितबिम्बे
तरुणाब्जमुखि प्रदेहि मम सौख्यम् ॥ १२५ ॥

स्फुर जगदम्ब सदा मे
मानसपद्मे सरोजभवजाये ।
वरदाननिरतपाणे
वीणापाणेऽधरे शोणे ॥ १२६ ॥

राकाचन्द्रसदृक्षं
तव मुखपद्मं हृदम्बुजे स्मरताम् ।
कविता चेटीभूया-
त्तत्राम्ब न मेऽस्ति संदेहः ॥ १२७ ॥

कन्यां कुलशैलपते-
मान्यां सुरवैरिमुख्यदेवततेः ।
नौकां भवाम्बुराशे-
र्नौम्यहमनिशं शशाङ्कशिशुशीर्षाम् ॥ १२८ ॥

कांचन काञ्चनगर्व-
न्यक्कारधुरीणदेहकान्तिझरीम् ।
कमनीयकवनदात्रीं
कमलासनसुकृतसन्तति कलये ॥ १२९ ॥

तनुजितगाङ्गेयरुचिः
करधृतरुद्राक्षमालिकाकुम्भा ।
तनुतात्तामरसासन-
जाया जाड्यौघवारणं शीघ्रम् ॥ १३० ॥

मन्मूर्तिनीकाशतनुं सृजाशु
प्रविश्य तस्यां कुरु वासमत्र ।
व्याख्यानपीठे जगतां सुखाय
चिराय मातर्वचसां सवित्रि ॥

आदर्शवत्स्वच्छतरेषु चित्ते-
ष्वेवाङ्घ्रिपद्मं मम भाति सम्यक् ।
इत्यर्थमावेदयितुं नताना-
मादर्शवृत्तिं प्रकरोषि पादम् ॥ १४० ॥

सकृत्प्रणन्तॄनपि भक्तलोका-
ननेकधा किं प्रणतान्विभाव्य ।
तदानुगुण्येन फलानि दातु-
मादर्शमङ्घ्रेः सविधे दधासि ॥ १४१ ॥

लब्धप्रतिष्ठः परिपूर्णचन्द्रे
करोमि वासं कथमर्धचन्द्रे ।
एवं कलङ्कः परिचिन्त्य नील-
रत्नापदेशात्किमु भाति शीर्षे ॥ १४२ ॥

कमलासनस्य पत्यु-
र्ध्यानात्सततं पतिव्रते किमिदम् ।
कमलासनत्वमागाः
स्वयमपि वाचां सवित्रि मे ब्रूहि ॥ १४३ ॥

सतां हृदब्जेषु वसाम्यजस्र-
मित्यर्थमावेदयितुं जनानाम् ।
पद्मे निवासं प्रकरोषि मातः
किं पद्मयोनेर्दयिते वदास्मै ॥ १४४ ॥

हस्तेनादाय शीघ्रं नतहृदयसरोजातमीशे गिरां किं
चाञ्चल्यं तत्र दृष्ट्वा बहुलमथ निजं ह्यासनत्वं प्रकल्प्य ।
अध्यास्ते स्थैर्यसिद्ध्यै परमिह भवती भर्तृयुक्ता ह्यजस्रं
मातुः पुत्रेषु पूर्णा प्रभवति करुणा हेतुशून्यैव वाणि ॥

रथस्थितां मां मनुजा जगत्या
पश्यन्ति ये भक्तियुतान्तरङ्गाः ।
मनोरथावाप्तिरशेषतः स्या-
त्तेषामिति द्योतयितुं रथस्था ॥ १४६ ॥

पद्मासनस्थितौ मम
पदयोः स्फुटता भवेन्नैव ।
नम्रजनानामिति किं
तिष्ठसि पादौ विवृण्वाना ॥ १४७ ॥

उपविष्टायास्तन्द्री
कदाचिदपि मे नतावने प्रभवेत् ।
इति तिष्ठसि किमु नम्रां-
स्तन्द्राहीनावितुं गिरां देवि ॥ १४८ ॥

मत्पादाम्बुजसेवकानतिजवात्संसारवारांनिधे-
राकृष्योद्धरणं विधेयमधुनेत्युत्थाय पद्मासनात् ।
यो वा कश्चिदिहेत्य जन्मजलधौ मग्नोऽहमस्मीत्यतो
मां रक्षेति समाह्वयेदिति मुदा तिष्ठस्यहो वाणि किम् ॥

आकर्षति यथायांसि
ह्ययस्कान्तमणिर्द्रुतम् ।
तथैव त्वन्मुखाम्भोजं
नतचित्तानि शारदे ॥ १५० ॥

धातुः पुण्यततिः काचि-
द्वाचां धाटीं ददातु मे
यां दृष्ट्वा लज्जितो भूया-
त्सुराचार्योऽपि तादृशीम् ॥ १५१ ॥

कटाक्षजितनीलाब्जा
करिकुम्भनिभस्तनी ।
करोतु मम कल्याणं
कमलासनकामिनी ॥ १९२ ॥

कंजभवपुण्यराशे
कम्रस्मितजितचकोरबन्धुचये ।
कंसमदमर्दनचणे
कंचन पुरुषार्थमर्थयन्नौमि ॥ १९३ ॥

मतिजितसुरगुरुगर्वा-
न्प्रकुर्वती शीघ्रमेव पदनम्रान् ।
कलये हृदि जगदम्बां
करपद्मलसत्सुधाकुम्भाम् ॥ १९४ ॥

उन्नम्योन्नम्य सन्ध्यादि-
चन्द्रराजतपात्रकम् ।
यामिनीकामिनी तारा-
कुसुमानि चिनोति किम् ॥ १९५ ॥

तीरात्तीरं चरन्ती कमलजदयिता पोतवर्येण मोदा-
त्कारुण्याक्रान्तचेता नतनरनिकरं बोधयत्येनमर्थम् ।
संसारापारसिन्धुं मम पदसरसीजातविन्यस्तबुद्धी-
न्भक्त्याख्येनोडुपेन द्रुतमिह मनुजांस्तारयामीति नूनम् ।

वनजासनवरमानिनि
सम्यक्कर्तुं किमासनं पत्युः ।
वनजानि पत्रपुष्पा-
ण्यानयसे कक्षपाणिपद्मैस्त्वम् ॥ १९७ ॥

ग्रामीणपुष्पबृन्दं
दृष्ट्वा दृष्ट्वानुघस्रमम्ब किमु ।
वनजानि पुष्पवर्या-
ण्यानयसे किंविधानीति ॥ १९८ ॥

अवनरतायाः किमु मम
पदे पदे नैव भवति वनगमनम् ।
इत्येकदैव वनजा-
न्यानयसे कक्षमध्येन ॥ १९९ ॥

दण्डधृद्भयनिवारणेच्छुभि-
    र्दम्भमोहमुखदोषवर्जितैः ।
दण्डितेन्द्रियचयैर्निषेविते
    दन्तितुल्यगमनेऽव शारदे ॥ १६० ॥

वाचामीशः प्रभवति यदालोकमात्राज्जडाम्यो
  नाकाधीशः प्रभवति तथा रङ्कवर्योऽपि लोके ।
तच्चन्द्राब्जप्रमुखनिबिडाहंकृतेर्भेददक्षं
  नित्यं वक्त्रं हृदयकुहरे भावयामि त्वदीयम् ॥

अतिचपलं मम हृदयं
    तव रूपं चातिसूक्ष्ममिति निगमाः ।
कथमम्ब मामकीनं
    मन एतद्वेत्तु तावकं रूपम् ॥ १६२ ॥

ऐंकारस्तव बीजं
    वदने मम वसतु सर्वदा वाणि ।
तेनाहं सकलार्था-
    न्क्षिप्रं संसाधयामि नो विशयः ॥ १६३ ॥

**इति श्रीशारदास्तोत्रम् संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ श्रीशारदाशतश्लोकीस्तवः ॥



करोतु पदविन्यासा-
न्कमलासनकामिनी ।
जिह्वाग्रे मम कारुण्या-
ज्जितचन्द्रायुतप्रभा ॥ १ ॥

पापेऽपि शारदाम्ब त्वं
कृत्वा बहुकृपां मयि ।
गरीयसीं चापि वाञ्छां
पूरयाशु कृपानिधे ॥ २ ॥

बहुभिस्त्वद्वदनाम्बुज-
मुल्लेखैः स्तोतुमार्यजनहृद्यैः
प्रतिभां प्रयच्छ मह्यं
करुणाजलधे पयोजभवजाये ॥ ३ ॥

चम्पकसुमकोरकयु-
क्चकितमृगीप्रेक्षणेन संयुक्तम् ।
शुककेकिनिनदजुष्टं
वनमिव तव भाति वाणि वदनाब्जम् ॥ ४ ॥

नासिकाख्यवरशाखया युतं
खञ्जरीटखगयुग्मभूषितम् ।
पक्वबिम्बफलसंयुतं शिवे
भाति भूरुह इवाननं तव ॥ ५ ॥

भक्तकेकिकुलतोषणव्रतं
पद्मसंभवहृदम्बराश्रितम् ।
गद्यपद्यमयवारिसंददन्-
न्मेघवत्तव मुखं विभाति मे ॥ ६ ॥

नेत्रोत्पलालंकृतमध्यभागं
भ्रूवल्लिकाबम्भरपङ्क्तिरम्यम् ।
पक्ष्मालिशैवालयुतं विभाति
तवास्यमेतत्सरसीव वाणि ॥ ७ ॥

सुचिल्लिकातोरणशोभमानं
विशालफालाङ्गणरम्यरम्यम् ।
उत्तुङ्गमाणिक्यकिरीटहर्म्यं
बिभाति वेश्मेव तवाम्ब वक्त्रम् ॥ ८ ॥

नयनझषयुतोऽयं दन्तमुक्ताफलाढ्यो
दशनवसननाम श्रीप्रवालप्रभायुक् ।
प्रतिपदमभिवृद्धैः कान्तिपूरैः समेतः
शरधिरिव विभाति त्वन्मुखं वाक्सवित्रि ॥ ९ ॥

कलय कलिविमोकं कालकालानुजाते
कलय शुभसमृद्धिं भूमिमध्येऽखिलेऽस्मिन् ।
कलय रुचिसमृद्धिं स्वस्वधर्मे जानानां
कलय सुखसमृद्धिं स्वस्वधर्मे रतानाम् ॥ १० ॥

स्फुर हृदयसरोजे शारदे शुभ्रवर्णे
कलशममृतपूर्णं मालिकां बोधमुद्राम् ।
सरसिजनिभहस्तैर्बिभ्रती पुस्तकं च
प्रणतहृदयमच्छं कुर्वती तूर्णमेव ॥

पालय मां करुणाब्धे
परिवारयुतं त्विहापि शृङ्गाद्रौ ।
शारदशशिनिभवदने
वरदे लघु शारदे सदये ॥ १२ ॥

ऐन्द्रीमाशामैन्दवी वा कलामि-
त्यादौ बीजं जातु मातस्त्वदीयम् ।
व्याजाद्वा यो व्याहरेत्तस्य वक्त्रा-
द्दिव्या वाचो निःसरन्त्यप्रयत्नात् ॥ १३ ॥

शारदे तव पदाम्बुजयुग्मं
बोधपुष्परसपूर्णमजस्रम् ।
मामकं हृदयसंज्ञकमीशे
नैव मुञ्चतु सरः करुणाब्धे ॥ १४ ॥



कथितानि मदीप्सितानि मात-
र्मुहुरग्रे तव शारदाम्बिके त्वम् ।
न हि पूरयसे चिरायसे किं
मदघौघात्किमु शक्त्यभावतो वा ॥

अद्यैव मत्प्रार्थितमम्ब दद्या
यदि त्वपारां करुणां विधाय ।
वेलाविहीनं सुखमाप्नुयां हि
नैवात्र संदेहलवोऽपि कश्चित् ॥

कमनीयकवित्वदां जवा-
द्रमणीयाम्बुजतुल्यपद्युताम् ।
शमनीयभयापहारिणीं
रमणीं पद्मभवस्य भावये ॥

काङ्क्षे कमलजकामिनि
कमनीयैः पद्यनिकुरुम्बैः ।
स्तोतुं वाचां निकरं
स्वायत्तं कलय जगदम्ब ॥

कामं मम फालतले
लिखतु लिपिं दुःखदां विधिः सततम् ।
नाहं बिभेमि मात-
र्लुम्पामि त्वत्पदाब्जरजसा ताम् ॥

किं कल्पवृक्षमुख्यैः
 किं करधृतमेरुणा शिवेनापि ।
किं कमलया च हृदि चे-
 त्किंकरसर्वेष्टदा वाणि ॥ २० ॥

तुङ्गातटनिकटचरं
 भृङ्गावलिगर्वहरणचणचिकुरम् ।
श्रीशारदाभिधानं
 भाग्यं मम जयति शृङ्गशैलाग्रे ॥ २१ ॥

निरणायि मया समस्तशास्त्रा-
 ण्यपि वीक्ष्य प्रणतार्तिहारि लोके ।
प्रविहाय तवाङ्घ्रिपङ्कजातं
 न परं वस्त्विति वाणि निश्चितं तत् ॥ २२ ॥

पद्मासनासि खलु भारति वागधीशे
 पद्मासनप्रियतमे करलग्नपद्मे ।
मत्कं मनोऽम्बुजमहो स्वयमेव मातः
 श्रीशारदाम्ब विजहासि किमत्र वाच्यम् ॥ २३ ॥

आनीय दिव्यकुसुमानि किरन्ति लोका
ये त्वत्पदाब्जयुगलं वचसां सवित्रि ।
तान्प्राप्तराजपदवींस्तरसा किरन्ति
पौराङ्गनाः कुसुमलाजचयेन नूनम् ॥ २४ ॥

आज्ञासीद्गौरवी मे तव खलु करुणावारिधिः शारदाम्बा
साष्टाङ्गं योगमारादुपदिशति भवानौरसः सूनुरस्याः ।
इत्यप्यद्यापि मातर्न हि खलु करुणा जायते मय्यनाथे
किं वा कुर्यां वदाम्ब प्रणतभयहरे शारदे चापलोऽहम् ॥

नाहं निगृह्य करणानि सरोजजात-
जाये त्वदीयपदपङ्कजयोर्हि सेवाम् ।
शक्नोमि कर्तुमलसाग्रशिखामणिर्य-
त्तस्मान्निसर्गकरुणां कुरु मय्यनाथे ॥ २६ ॥

वाणि सरस्वति भारति
वाग्वादिनि वारिजातजनिजाये ।
काश्मीरपुरनिवासिनि
कामितफलबृन्ददायिनि नमस्ते ॥ २७ ॥

शरणं त्वच्चरणं मे
नान्यद्वाग्देवि निश्चितं त्वेतत् ।
तस्मात्कुरु करुणां म-
य्यनन्यशरणे द्रुतं मातः ॥ २८ ॥

शरदभ्रसदभ्रवस्त्रवीता
करदूरीकृतपङ्कजाभिमाना ।
चरणाम्बुजलग्ननाकिमौलि-
र्वरदा स्यान्मम शारदा दयार्द्रा ॥ २९ ॥

स्थापय नरकेषु सदाप्यथ
सुखकाष्ठासु दिव्यलोकेषु ।
न हि तत्र मे विचारः
परं तु चित्तं तवाङ्घ्रिगतमस्तु ॥ ३० ॥

शृङ्गाद्रिवासलोले
भृङ्गाहंकारहारिकचभारे ।
तुङ्गातीरविहारे
गङ्गाधरसोदरि प्रसीद मम ॥ ३१ ॥

ऋश्यशृङ्गजनिभूमिविभूषे
कश्यपादिमुनिवन्दितपादे ।
पश्यदङ्घ्रिमुखपालनलोले
वश्यपङ्कजभवेऽव सदा माम् ॥ ३२ ॥

कम्बुडम्बरनिवर्तककण्ठा-
मम्बुधिं निरवधिं करुणायाः ।
अम्बुदप्रतिमकेशसमूहा-
मम्बुजोद्भवसखीं कलयेऽहम् ॥ ३३ ॥

भर्मगर्वहरसंहननाभां
शर्मदां पदसरोजनतेभ्यः ।
कर्मभक्तिमुखपद्धतिगम्यां
कुर्महे मनसि पद्मजजायाम् ॥ ३४ ॥

शंभुसोदरि शशाङ्कनिभास्ये
मन्दबुद्धिविततेरपि शीघ्रम् ।
वाक्प्रदायिनि कृपामृतराशे
शृङ्गशैलवरवासविलोले ॥ ३५ ॥

तुष्टिमेहि वचसां जननि त्वं
यत्कृतेन विधिनाविधिना वा ।
ऐंजपेन परिपूरय वाञ्छां
मामकीं च महतीमपि शीघ्रम् ॥ ३६ ॥

तवौरसं सूनुमहो त्वदीय-
भक्ताग्रगण्या मम देशिकेन्द्राः ।
प्राहुर्यतोऽतो मयि शारदाम्ब
पाप्यग्रगण्येऽपि दया विधेया ॥ ३७ ॥

तवौरसं मां सुतमाहुरार्या-
स्त्वत्पादभक्ताग्रसरा यतोऽतः ।
सोढ्वा मदीयान्सकलापराधा-
न्पुरो भवाम्बाशु गिरां सवित्रि ॥ ३८ ॥

भक्तेष्टपाथोनिधिपूर्णचन्द्रः
कवित्वमाकन्दवसन्तकालः ।
जाड्यान्धकारव्रजपद्मबन्धु-
रम्ब प्रणामस्तव पादपद्मे ॥ ३९ ॥

मुखाम्बुजं भातु जगज्जनन्या
हृदम्बुजे मे जितचन्द्रबिम्बम् ॥
रदाम्बराधःकृतपक्वबिम्बं
महाघविध्वंसनचञ्च्वजस्रम् ॥ ४० ॥

यानेन हंसं वदनेन चन्द्रं
श्रोणीभराच्छैलपतिं च कामम् ।
कांचिद्धसन्तीं कलये हृदब्जे
चन्द्रार्धराजद्वरकेशपाशाम् ॥ ४१ ॥

विस्मृत्य देहादिकमम्ब सम्य-
क्समुच्चरंस्तावकमन्त्रराजम् ।
तुङ्गानदीपुण्यतटे कदाहं
सुसैकते स्वैरगतिर्भवामि ॥ ४२ ॥

श्रीशादिसंसेवितपादपद्मे
श्रीबोधदानव्रतबद्धदीक्षे ।
श्रीकण्ठसोदर्यमितानुकम्पे
श्रीशारदाम्बाशु कृपां कुरुष्व ॥ ४३ ॥

हृद्यानि पद्यानि विनिःसरन्ति
त्वदङ्घ्रिसंपूजकवक्त्रपद्मात् ।
विना प्रयत्नं तरसा न चित्रं
त्वमम्ब यस्माद्वचसां सवित्री ॥ ४४ ॥

गमागमविवर्जितैरसुभिरन्तरङ्गेऽनिशं
गजास्यगुहनन्दिभिः सुरवरैर्मुदा चिन्तिते ।
गजाजिनधरानुजे गलिततृष्णलोकेक्षिते
गतिं मम शुभां मतिं सपदि देहि वागीश्वरि ॥

जलोद्भवजभामिनि प्रणतसौख्यभूमप्रदे
जडत्वविनिवारणव्रतनिषक्तचेतोऽम्बुजे ।
जगत्त्रयनिवासिभिः सततसेव्यपादाम्बुजे
जगज्जननि शारदे जनय सौख्यमत्यद्भुतम् ॥४६॥

मदेभगमनेऽवने नततरेरनेकैः सुखै-
रनारतमजामितं प्रवणहृत्सरोजेऽम्बिके ।
कुतो मयि कृपा न ते प्रसरति प्रसन्ने वद
प्रपञ्चजननप्रभुप्रणयिनि प्रपद्येऽद्य कम् ॥ ४७ ॥

कदा वा शृङ्गाद्रौ विमलतरतुङ्गापरिसरे
वसन्मातर्वाचां शिरसि निदधानोऽञ्जलिपुटम् ।
गिरां देवि त्राहि प्रणतवरदे भारति जवा-
त्प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥

जगन्नाथं गङ्गा विविधवृजिनौघैः परिवृतं
यथारक्षत्पूर्वं सकलमपि हृत्वाशु दुरितम् ।
पुनश्चान्ते दत्त्वा करसरसिजं पूर्णकृपया
जनैः सद्भिः प्राप्यां परमपदवीं प्रापितवती ॥

तथा शान्तं पापं सकलमपि कृत्वा मम जवा-
द्धृदम्भोजे लग्नं कुरु तव पदाम्भोरुहयुगम् ।
कराम्भोजे पश्चात्परमकृपया देवि वचसां
प्रदत्त्वालम्बं मां गमय पदवीं निर्मलतराम् ॥९०॥

दवीयांसं त्वेनं परमकृपया देशिकमुखा-
त्समानीयाम्ब त्वं तव पदपयोजातनिकटम् ।
अवित्वापीयन्तं समयमधुना देवि भजसे
यदौदास्यं तर्हि त्रिजगति ममान्यां वद गतिम् ॥

कामं सन्तु सुरा निरन्तरनिजध्यानार्चनाकारिणो
लोकान्स्वेप्सितसर्वसौख्यसहितान्कर्तुं जगत्यां किल ।
पूजाध्यानजपादिगन्धरहितांस्त्रातुं पुनस्त्वां विना
नान्यद्दैवतमस्ति पद्मजमनःपद्मार्भकार्कप्रभे ॥ ९२ ॥

कारुण्यं मयि धेहि मातरनिशं पद्मोद्भवप्रेयसि
प्रारब्धं मम दुष्टमाशु शमय प्रज्ञां शुभां यच्छ मे ।
कर्तुं काव्यचयं रसौघभरितं शक्तिं दृढां भक्तिम-
प्यंहःसञ्चयवारिणीं तव पदाम्भोजे कृपाम्भोनिधे ॥

कुर्यामद्य किमम्ब भक्तिरहितः पूजां जपं तर्पणम्
किं वैराग्यविवेकगन्धरहितः कुर्यां विचारं श्रुतेः ।
किं योगं प्रकरोमि चञ्चलमनाः शृङ्गाद्रिवासप्रिये
त्वत्पादप्रणतिं विहाय न गतिर्मेऽन्या गिरां देवते ॥

जह्यान्नैव कदापि तावकपदं मातर्मनो मामकं
मान्द्यध्वान्तनिवारणोद्यतदिनेशाखर्वगर्वावलि ।
गौरीनाथरमाधवाब्जभवनैः संभाव्यमानं मुदा
वाक्चातुर्यविधानलब्धसुयशः संपूरिताशामुखम् ॥

तुङ्गातीरविहारसक्तहृदये शृङ्गारजन्मावने
गङ्गाधारिमुखामरेन्द्रविनुतेऽनङ्गाहितापद्धरे ।
सङ्गातीतमनोविहाररसिके गङ्गातरङ्गायिता
भृङ्गाहंकृतिभेददक्षचिकुरे तुङ्गागिरो देहि मे ॥

त्वत्पादाम्बुजपूजनात्तहृदयाम्भोजातशुद्धिर्जनः
स्वर्गं रौरवमेव वेत्ति कमलानाथास्पदं दुःखदम् ।
कारागारमवैति चन्द्रनगरं वाग्देवि किं वर्णनै-
र्दृश्यं सर्वमुदीक्षते स हि पुना रज्जूरगाद्यैः समम् ॥

त्वत्पादाम्बुरुहं विहाय शरणं नास्त्यत्र मेऽन्यद्ध्रुवं
वाचां देवि कृपापयोजलनिधे कुत्रापि वा स्थापय ।
अप्यूर्ध्वं ध्रुवमण्डलादथ फणीन्द्रादप्यधस्तत्र मे
त्वन्न्यस्तैहिकपारलौकिकभरस्त्वासे न कापि व्यथा ॥

त्वत्पादाम्बुरुहं हृदाख्यसरसि स्याद्रूढमूलं यदा
वक्त्राब्जे त्वमिवाम्ब पद्मनिलया तिष्ठेद्गृहे निश्चला ।
कीर्तिर्यास्यति दिक्तटानपि नृपैः संपूज्यता स्यात्तदा
वादे सर्वनयेष्वपि प्रतिभटान्दूरीकरोत्येव हि ॥५९॥

मातस्त्वत्पदवैभवं निगदितुं प्रारभ्य नागेश्वरा-
स्वप्नाचार्यकवीन्दुशेखरदिनेशाद्याः प्रभग्ना मुहुः ।
क्वाहं तत्कथने जडेष्वचरमः कारुण्यपाथोनिधे
वाचां देवि सुतस्य साहसमिदं क्षन्तव्यमेवाम्बया ॥

मातः शृङ्गपुरीनिवासरसिके मातङ्गकुम्भस्तनि
प्राणायाममुखैर्विनापि मनसः स्थैर्यं द्रुतं देहि मे ।
येनाहं सुखमन्यदुर्लभमहोरात्रं भजाम्यन्वहं
प्राप्स्याम्यात्मपरैकबोधमचलं निःसंशयं शारदे ॥

वेदाभ्यासजडोऽपि यत्करसरोजातप्रहात्पद्मभू-
श्चित्रं विश्वमिदं तनोति विविधं वीतक्रियं सक्रियम् ।
तां तुङ्गातटवाससक्तहृदयां श्रीचक्रराजालयां
श्रीमच्छंकरदेशिकेन्द्रविनुतां श्रीशारदाम्बां भजे ॥

वैराग्यं दृढमम्ब देहि विषयेष्वाद्यन्तदुःखप्रदे-
ष्वाम्नायान्तविचारणे स्थिरतरां चास्थां कृपावारिधे ।
प्रत्यग्ब्रह्मणि चित्तसंस्थितिविधिं संबोधयाश्वेव मां
त्वं ब्रूषे सकलं ममेति गुरवः प्राहुर्यतः शारदे ॥ ६२

कमलासनवरकामिनि
करधृतचिन्मुद्रिके कृपाम्भोधे ।
करकलितामलकाभं
तत्त्वं मां बोधयाशु जगदम्ब ॥ ६४ ॥

करविधृतकीरडिम्भां
शरदभ्रसधर्मवस्त्रसंवीताम् ।
वरदाननिरतपाणिं
सुरदां प्रणमामि शारदां सदयाम् ॥ ६५ ॥

कामाक्षीविपुलाक्षी-
मीनाक्षीत्यादिनामभिर्मातः ।
काञ्चीकाशीमधुरा-
पुरेषु भासि त्वमेव वाग्जननि ॥ ६६ ॥

चन्द्रार्धशेखरापर-
रूपश्रीशंकरार्यकरपूज्ये ।
चन्द्रार्धकृतवतंसे
चन्दनदिग्धे नमामि वाणि पदे ॥ ६७

जय जय चिन्मुद्रकरे
जय जय शृङ्गाद्रिविहरणव्यग्रे ।
जय जय पद्मजजाये
जय जय जगदम्ब शारदे सदये ॥ ६८ ॥

दुर्वसनदत्तशाप-
प्रतिपालनलक्ष्यतः समस्तानाम् ।
रक्षार्थमवनिमध्ये
कृतचिरवासां नमामि वाग्देवीम् ॥ ६९ ॥

नवनवकवनसमर्थं
पटुतरवाग्धूतवासवाचार्यम् ।
वनजासनवरमानिनि
वरदे कुरु शीघ्रमङ्घ्रिनतम् ॥ ७० ॥

भगवत्पदमण्डनया-
र्वादमहे सकललोकचित्रकरे ।
अङ्गीकृतमाध्यस्थ्यां
जगदम्बां नौमि शारदां सदयाम् ॥ ७१ ॥

सेवापूजानमनविधयः सन्तु दूरे नितान्तं
कादाचित्का स्मृतिरपि पदाम्भोजयुग्मस्य तेऽम्ब ।
मूकं रङ्कं कलयति सुराचार्यमिन्द्रं च वाचा
लक्ष्म्या लोको न च कलयते तां कलेः किं हि दौःस्थ्यम् ॥

आशावस्त्रः सदात्मन्यविरतहृदयस्त्यक्तसर्वानुरागः
काये चक्षुर्मुखेष्वप्यनुदितममतः क्वापि कस्मिंश्च काले ।
शैलाग्रेऽरण्यकोणे क्वचिदपि पुलिने क्वापि रेवातटे वा
गङ्गातीरेऽथ तुङ्गातटभुवि च कदा स्वैरचारी भवेयम् ॥

कल्पन्तां काम्यसिद्ध्यै कलिमलहतये चाक्षयैश्वर्यसिद्ध्यै
कारुण्यापारपूराः कमलभवमनोमोददानव्रताढ्याः ।
कात्यायन्यब्धिकन्यामुखसुररमणीकाङ्क्ष्यमाणाः कवित्व-
प्राग्भाराम्भोधिराकाहिमकरकिरणाः शारदाम्बाकटाक्षाः ॥

कल्यादौ तन्महिम्ना कतिपयदिवसेष्वेव लुप्तेषु मार्गे-
ष्वाम्नायप्रोदितेषु प्रवरसुरगणैः प्रार्थितः पार्वतीशः ।
आम्नायाध्वप्रवृद्ध्यै यतिवरवपुषागत्य यां शृङ्गशैले
संस्थाप्यार्चां प्रचक्रे निवसतु वदने शारदा सादरं सा ॥

तिष्ठाम्यत्रैव मातस्तव पदयुगलं वीक्षमाणः प्रमोदा-
न्नाहं त्यक्त्वा तवाङ्घ्रिं सकलसुखकरं क्वापि गच्छामि नूनम् ।
छायां मत्कां विधत्स्व प्रवचननमनध्यानपूजासु शक्तां
शुद्धामेकां त्रिलोकीजननपटुविधिप्राणकान्ते नमस्ते ॥

त्वद्बीजे वर्तमाने वदनसरसिजे दुर्लभं किं नराणां
धर्मो वार्थश्च कामोऽप्यथ च सकलसंत्यागसाध्यश्च मोक्षः ।
काम्यं वा सार्वभौम्यं कमलजदयितेऽहेतुकारुण्यपूर्णे
शृङ्गाद्र्यावासलोले भवति सुरवराराध्यपादारविन्दे ॥ ७७ ॥

दृष्ट्वा त्वत्पादपङ्केरुहनमनविधावुद्यतान्भक्तलोका-
न्दूरं गच्छन्ति रोगा हरिमिव हरिणा वीक्ष्य यद्वत्सुदूरम् ।
कालः कुत्रापि लीनो भवति दिनकरे प्रोद्यमाने तमोव-
त्सौख्यं चायुर्यथाब्जं विकसति वचसां देवि शृङ्गाद्रिवासे ॥

नाहं त्वत्पादपूजामिह गुरुचरणाराधनं चाप्यकार्षं
नाश्रौषं तत्त्वशास्त्रं न च खलु मनसः स्थैर्यलेशोऽपि कश्चित् ।
नो वैराग्यं विवेको न च मम सुदृढा मोक्षकाङ्क्षापि नूनं
मातः का वा गतिर्मे सरसिजभवनप्राणकान्ते न जाने ॥

नौमि त्वां शैववर्याः शिव इति गणनाथार्चका विघ्नहर्ते-
त्यार्येत्यम्बाङ्घ्रिसक्ता हरिभजनरता विष्णुरित्यामनन्ति ।
यां तां सर्वस्वरूपां सकलमुनिमनःपद्मसंचारशीलां
शृङ्गाद्यावासलोलां कमलजमहिषीं शारदां पारदाभाम् ॥

यः कश्चिद्बुद्धिहीनोऽप्यविदितनमनध्यानपूजाविधानः
कुर्याद्यद्यम्ब सेवां तव पदसरसीजातसेवारतस्य ।
चित्रं तस्यास्यमध्यात्प्रसरति कविता वाहिनीवामराणां
सालङ्कारा सुवर्णा सरसपदयुता यत्नलेशं विनैव ॥ ८१ ॥

याचन्ते नम्रलोका विविधगुरुरुजाक्रान्तदेहाः पिशाचै-
राविष्टाङ्गाश्च तत्तज्जनितबहुतरक्लेशनाशाय शीघ्रम् ।
किं कुर्यां मन्त्रयन्त्रप्रमुखविधिपरिज्ञानशून्यश्चिकित्सां
कर्तुं न त्वत्पदाब्जस्मरणलवमृते वाणि जानेऽत्र किंचित् ॥

रागद्वेषादिदोषैः सततविरहितैः शान्तिदान्त्यादियुक्तै-
राचार्याङ्घ्र्यब्जसेवाकरणपटुतरैर्लभ्यपादारविन्दा ।
मुद्रास्त्रकुम्भविद्याः करसलिलरुहैः संदधाना पुरस्ता-
दास्तां वाग्देवता नः कलिकृतविविधापत्तिविध्वंसनाय ॥

वराय पापकदम्बं
तारय संसारसागरं तरसा ।
शोधय चित्तसरोजं
बोधय परतत्त्वमाशु मामम्ब ॥ ८४ ॥

सच्चिद्रूपात्मनिष्ठः प्रगलितसकलाक्षादिवृत्तिः शयानो
भुञ्जानः सत्यसौख्यं तदितरसुखतः प्राप्तनीरागभावः ।
पाषाणे वाथ तल्पे वनभुवि सदने पार्थिवस्याश्महेम्नो-
र्नार्यां मृत्यौ च तुल्यः सततसुखिमनाः स्यां कदा शारदाम्ब ॥

किं पाठयेयं लघुचन्द्रिकां वा
किं वा त्यजेयं सकलप्रपञ्चम् ।
स्वप्नेऽद्य मे ब्रूहि किमत्र कार्यं
डोलायितं मामकमम्ब चेतः ॥ ८६ ॥

त्यागे वाध्यापने वा मम खलु न गिरां देवि काप्यस्ति शक्ति-
स्त्वं वै सर्वत्र हेतुर्यदसि निरवधिर्वारिराशिः कृपायाः ।
तस्मात्स्वप्नेऽद्य कार्यं मम खलु निखिलं बोधयैवं कुरुष्वे-
त्यज्ञानां बोधनार्थं त्वमिह बहुविधा अम्ब मूर्तीर्बिभर्षि ॥

वितर विधिप्रेयसि मे
विमलधियं वाञ्छितं च तरसैव ।
विष्णुमुखामरवन्द्ये
विधुबिम्बसमानवदनकंजाते ॥ ८८ ॥

शारदनीरदसन्निभवसने
वनजासनान्तरङ्गचरे ।
वरटावल्लभयाने
वरदे वाग्देवि शारदे पाहि ॥ ८९ ॥

सप्तदशाघस्रमविरत-
मीशेन समस्तविद्यानाम् ।
विरचितवादां कुतुका-
त्सामोदं नौमि वाग्जननीम् ॥ ९० ॥

सुरवरनिषेव्यपादे
सुखलवाधूतकेकिकुलनिनदे ।
सुरवनविहारबलदे
सुरवरदे पाहि शारदे सुरदे ॥ ९१ ॥

कुन्दरदनेऽम्ब वाणि मु-
कुन्दरवीन्द्वादिदेववर्येड्ये ।
कुन्दरकृपावशान्मु-
कुन्दवराद्यांश्च मे निधीन्देहि ॥ ९२ ॥

स्फुरशरदिन्दुप्रतिभट-
वदने वाग्देवि मामके मनसि ।
वरदाननिरतपाणे
सरसिजनयने सरोजजातसखि ॥ ९३ ॥

अस्थिरभक्तेर्मम देवि गिरां
शीघ्रं दत्त्वा कांचित्सिद्धिम् ।
कुरु सुदृढां मम तव पादाब्जे
भक्तिं शृङ्गगिरीन्द्रनिवासे ॥ ९४ ॥

सहमानसोदरि सह
प्रणतकृता मानहीनमन्तुततीः ।
सहमानसोदरीत्वं
त्यज वा युक्तं यदत्र कुरु वाणि ॥ ९५ ॥

वलभिन्मुखनिर्जरवरसेव्ये
कलवचनन्यक्कृतपिकरावे ।
जलजप्रतिभटपदयुगरम्ये
कलय प्रवरं कृतिनामेनम् ॥ ९६ ॥

करविलसद्वरपुस्तकमाले
शरदब्जाहंकृतिहरचेले ।
धरणीसुतानिभकुङ्कुमफाले
शरणं मम भव धृतशुकबाले ॥ ९७ ॥

कलयासक्तिं कमलजदयिते
तुलनाशून्यामीमनुवर्ये ।
वलयाञ्चितकरसरसीजाते
ललनाभिः सुरविततेः पूज्ये ॥ ९८ ॥

शृङ्गक्ष्माभृत्कूटविहारे
तुङ्गातटभूकृतसंचारे ।
वाचां देवि प्रार्थितमर्थं
शीघ्रं देहि प्रणतायास्मै ॥ ९९ ॥

माहं सोढुं कालविलम्बं
शक्नोम्यम्ब प्रणतप्रवणे ।
ईप्सितमर्थं देहि तदाशु
द्रुहिणस्वान्ताम्बुजबालघृणे ॥ १०० ॥

इति श्रीशारदाशतश्लोकीस्तवः संपूर्णः ॥



॥ श्रीः ॥

# ॥ श्रीजगदम्बास्तुतिः ॥



भज जगदम्बां भज जगदम्बां
जगदम्बां भज मूढमते ।
प्राप्ते काले न हि न हि रक्षति
वित्तं मित्रं पुत्रो जाया ॥ १ ॥

भववाञ्छां त्यज कुरु गुरुसेवां
विनयावनतः प्रतिदिनमपि भोः ।
भरताग्रजवद्भज पितृभक्तिं
तर भवसागरमाशु सुबुद्धे ॥ २ ॥ भज०

शमदमसाधनसंपद्युक्तो
नित्यानित्यविचारयुतश्च ।
विषयेष्वखिलेष्वाशारहितो
भव मोक्षेच्छाभाजनमपि भोः ॥ ३ ॥ भज०

श्रोत्रियमेनोगन्धविहीनं
बहुदूरीकृतरागद्वेषम् ।
ब्रह्मणि निष्ठितहृदयाम्भोजं
भज गुरुवर्यं करुणासिन्धुम् ॥ ४ भज०

आसाद्येत्थं गुरुवरमेनं
पृच्छ प्रश्नं विनमन्मूर्तिः ।
संसाराब्धिं दुस्तरमारा-
द्गुरुवर्य कथं प्रतरेयामिति ॥ ५ ॥ भज०



श्रीशारदागौरीसहोत्सवे

# ॥ गीर्ललिताम्बिकास्तुतिः ॥



कञ्जाक्षमुख्यामरपूजिताभ्यां
  निजाश्रिताशेषवरप्रदाभ्याम् ।
शृङ्गाद्रिकाञ्चीपुरवासिनीभ्यां
  नमो नमो गीर्ललिताम्बिकाभ्याम् ॥ १ ॥

एकान्तपूजापरितुष्टहृद्भ्या-
  मेकाक्षरीशीलनलब्धपद्भ्याम् ।
विधीशचित्ताब्जरविप्रभाभ्यां
  नमो नमो गीर्ललिताम्बिकाभ्याम् ॥ २ ॥

ईहाम्बुधेर्बाडवभारभृद्भ्या-
  मीकारयुङ्मन्त्रविबोधिताभ्याम् ।
अजास्यशंभ्वङ्कविभूषणाभ्यां
  नमो नमो गीर्ललिताम्बिकाभ्याम् ॥ ३ ॥

॥ श्रीः ॥

# ॥ श्रीशारदास्तुतिः ॥



करोतु कल्याणपरंपरां नः
कारुण्यवाराशिरपाङ्गपातैः ।
कल्याणशैलप्रतिमस्तनाढ्या
कंजातसंजातमनोज्ञजाया ॥ १ ॥

एणाङ्कगर्वापहृतिप्रचण्ड-
तुण्डराधःकृतपक्वबिम्बा ।
एकान्तवासादरशालिमौनि-
लभ्याङ्घ्रिपद्मावतु वाक्सवित्री ॥ २ ॥

ईशाजविष्ण्वादिसुरार्च्यमाना
कुन्देन्दुशङ्खस्फटिकाच्छकान्तिः ।
ईहावियुक्ताप्यनिजस्वरूपा
बालेन्दुचूडावतु भारती नः ॥ ३ ॥

लक्ष्मीशिवाशोभितपार्श्वभागा
शचीप्रमुख्यामरमानिनीड्या ।
ललामराजन्निटिलप्रदेशा
वीणालसत्पाणिरवत्वजस्रम् ॥ ४ ॥



श्रीकालटिक्षेत्रे

# आर्याम्बिकाशंकरशारदा-स्तोत्रम् ॥



भक्तानशोकान्विदधामि शीघ्र-
मिति प्रबोधाय ततेर्जनानाम् ।
अशोकमूले विदधाति मोदा-
त्समाधिमार्या जगदार्यमाता ॥ १ ॥

काषायशुक्लाम्बरसंवृताभ्यां
काङ्क्षाधिकेष्टप्रदपूजनाभ्याम् ।
कायप्रभाधूतसुधाकराभ्याम्
नमो नमः शंकरशारदाभ्याम् ॥ २ ॥

आर्याम्बिकाशंकरशारदाभ्यो
निजाङ्गशोभाजितचन्द्रिकाभ्यः ।
दिगन्तसंन्यास्तयशच्छटाभ्यो
नमोऽस्तु मेधाप्रतिभाप्रदाभ्यः ॥ ३ ॥

आर्याम्बिकाशंकरशारदाभ्यः
प्रपन्नसंरक्षणदीक्षिताभ्यः ।
संपूरितानन्दमनोहराभ्यो
नमोऽस्तु निर्व्याजदयातनुभ्यः ॥ ४ ॥

आर्याम्बिकाशंकरशारदाभ्यः
पूर्णातटावासकृतादराभ्यः ।
कारुण्यसंपूरितमानसाभ्यो
नमोऽस्तु कल्याणगुणालयेभ्यः ॥ ५ ॥

**इति आर्याम्बिकाशंकरशारदास्तोत्रं संपूर्णम् ॥**





॥ श्रीमच्छंकरभगवत्पूज्यपादाः ॥

॥ श्रीः ॥

# श्रीशंकराचार्यसुवर्णमाला-स्तवः ॥



ओमिति दिविषत्प्रवराः
  शीर्षे कुर्वन्ति शासनं यस्य ।
ओंकारपद्मभृङ्गं
  तमहं प्रणमामि शंकराचार्यम् ॥ १ ॥

नत्वा यत्पदयुग्मं
  वाचस्पतिगर्वहारिवाक्ततयः ।
प्रभवन्ति हि भुवि मूका-
  स्तमहं प्रणमामि शंकराचार्यम् ॥ २ ॥

मन्मथमातङ्गजये
  कण्ठीरवतां प्रयाति जनसङ्घः ।
यत्पादाम्बुजनत्या
  तमहं प्रणमामि शंकराचार्यम् ॥ ३ ॥

शंपा प्राप पुरात्तैः
पुण्यैर्नूनं यदीयतनुसाम्यम ।
शङ्कादुर्द्रुमपरशुं
तमहं प्रणमामि शंकराचार्यम् ॥ ४ ॥

कम्बुस्तपञ्जलान्त-
र्न प्राप तुलां यदीयकण्ठस्य ।
काङ्क्षितदानधुरीणं
तमहं प्रणमामि शंकराचार्यम ॥ ५ ॥

राजाधिराजपदवीं
सद्यः प्राप्नोति दीनधौरेयः ।
यस्यापाङ्गलोका-
त्तमहं प्रणमामि शंकराचार्यम् ॥ ६ ॥

यमनियमाद्यङ्गयुतो
योगः सुलभो यदीयपदभाजाम् ।
यमभीतिभञ्जनकरं
तमहं प्रणमामि शंकराचार्यम् ॥ ७ ॥

स्तवराजं गुरुकृपया
　कृतवाञ्छ्रीसच्चिदानन्दः ।
अवनौ भक्त्या पठतां
　शं तनुताच्छंकराचार्यः ॥ ८ ॥

इति श्रीशंकराचार्यसुवर्णमालास्तवः संपूर्णः ॥



॥ श्रीः ॥

श्रीकुत्तालक्षेत्रे श्रीशंकरजयन्त्युत्सवे

# ॥ श्रीद्विनेत्रशंभुस्तुतिः ॥



अवतारेऽस्मिन्काम-
　प्रसक्त्यभावाद्विनेत्रत्वम् ।
अलमिति तार्तीयं किं
　नेत्रं शंभुस्तिरोधत्ते ॥ १ ॥

समताबोधाय नृणां
　पदपाथोजप्रणम्राणाम् ।
गिरिशेनाद्य कृपात-
　स्त्यक्ता वा विषमलोचनता ॥ २ ॥

अथवा किं बोधयितुं
　विकारहीनं पदं कृपाम्भोधे ।
वैरूप्यं मा भूदिति
　समलोचनतां दधासि मे ब्रूहि ॥ ३ ॥

द्वे विद्ये श्रुतिमध्ये
वेद्ये प्रोक्ते जनानां हि ।
इममर्थं बोधयितुं
नेत्रद्वन्द्वं गुरो धत्से ॥ ४ ॥

बाह्यं तथान्तरं च
द्वन्द्वं तमसो निवारयितुम् ।
अलमिति नेत्रद्वन्द्वं
धत्से किं यतिवर ब्रूहि ॥ ५ ॥

नेतारौ जगतां किल
विख्यातौ हरिहरौ लोके ।
तदुभयरूपत्वात्त्वयि
नेत्रद्वन्द्वं गुरो युक्तम् ॥ ६ ॥

स्वाहाभावादस्मि-
न्स्वाहानाथो निवृत्तो यत् ।
तस्मान्नेत्रद्वन्द्वं
शिष्टं यतिरूपशंकरे नूनम् ॥ ७ ॥

अज्ञानतिमिरसंवृत-
जनततये बोधनेत्रदानेन ।
अवशिष्टा किमु चास्मि-
न्नवतारे द्विनेत्रता शंभो ॥ ८ ॥

इति श्रीद्विनेत्रशंभुस्तुतिः संपूर्णा ॥



श्रीकालटिक्षेत्रे

# श्रीशंकाराचार्यभुजंगप्रयात स्तोत्रम् ॥



कृपासागरायाशुकाव्यप्रदाय
प्रणम्राखिलाभीष्टसंदायकाय ।
यतीन्द्रैरुपास्याङ्घ्रिपाथोरुहाय
प्रबोधप्रदात्रे नमः शंकराय ॥ १ ॥

चिदानन्दरूपाय चिन्मुद्रिकोद्य-
त्करायेशपर्यायरूपाय तुभ्यम् ।
मुदा गीयमानाय वेदोत्तमाङ्गैः
श्रितानन्ददात्रे नमः शंकराय ॥ २ ॥

जटाजूटमध्ये पुरा या सुराणां
धुनी साद्य कर्मन्दिरूपस्य शंभोः ।
गले मल्लिकामालिकाव्याजतस्ते
विभातीति मन्ये गुरो किं तथैव ॥ ३ ॥

नखेन्दुप्रभाधूतनम्रालिहार्दा-
न्धकारव्रजायाब्जमन्दस्मिताय ।
महामोहपाथोनिधेर्बाडबाय
प्रशान्ताय कुर्मो नमः शंकराय ॥ ४

प्रणम्रान्तरङ्गाब्जबोधप्रदात्रे
दिवारात्रमव्याहतोस्राय कामम् ।
क्षपेशाय चित्राय लक्ष्मक्षयाभ्यां
विहीनाय कुर्मो नमः शंकराय ॥ ५ ॥

प्रणम्रास्यपाथोजमोदप्रदात्रे
सदान्तस्तमस्तोमसंहारकर्त्रे ।
रजन्यामपीद्धप्रकाशाय कुर्मो
ह्यपूर्वाय पूष्णे नमः शंकराय ॥ ६ ॥

नतानां हृदब्जानि फुल्लानि शीघ्रं
करोम्याशु योगप्रदानेन नूनम् ।
प्रबोधाय चेत्थं सरोजानि धत्से
प्रफुल्लानि किं भो गुरो ब्रूहि मह्यम् ॥ ७ ॥

प्रभाधूतचन्द्रायुतायाखिलेष्ट-
प्रदायानतानां समूहाय शीघ्रम् ।
प्रतीपाय नम्रौघदुःखाघपङ्क्ते-
र्मुदा सर्वदा स्यान्नमः शंकराय ॥ ८ ॥

विनिष्कासितानीश तत्त्वावबोधा-
न्नतानां मनोभ्यो ह्यनन्याश्रयाणि ।
रजांसि प्रपन्नानि पादाम्बुजातं
गुरो रक्तवस्त्रापदेशाद्बिभर्षि ॥ ९ ॥

मतेर्वेदशीर्षाध्वसंप्रापकाया-
नतानां जनानां कृपार्द्रैः कटाक्षैः ।
ततः पापबृन्दस्य शीघ्रं निहन्त्रे
स्मितास्याय कुर्मो नमः शंकराय ॥ १० ॥

सुपर्वोक्तिगन्धेन हीनाय तूर्णं
पुरा तोटकायाखिलज्ञानदात्रे ।
प्रवालीयगर्वापहारस्य कर्त्रे
पदाब्जम्रदिम्ना नमः शंकराय ॥ ११ ॥

भवाम्भोधिमग्नाञ्जनान्दुःखयुक्ता-
ञ्जवादुद्दिधीर्षुर्भवानित्यहोऽहम् ।
विदित्वा हि ते कीर्तिमन्यादृशां भो
सुखं निर्विशङ्कः स्वपिम्यस्तयत्नः ॥ १२ ॥

इति श्रीशंकराचार्यभुजंगप्रयातस्तोत्रं संपूर्णम् ।



॥ श्रीः ॥

श्रीकालटिक्षेत्रे

# ॥ श्रीशंकरार्यपदावलम्बस्तवः ॥

---*---

नाकादिलोकविरतिः प्रभवेद्दृढा य-
द्वाक्यामृतश्रवणतोऽप्यतिकामुकस्य ।
स त्वं विरक्तिद जवात्पदनम्रपङ्क्त्यै
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ १ ॥

अन्नासुचित्तमुखकोशविवेचनेन
तत्त्वं परं द्रुततरं प्रतिबोधयंस्त्वम् ।
मोक्षप्रदायक पदाम्बुजसंनतेभ्यः
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २ ॥

क्लेशान्निवार्य कृपया तरसास्मितादी-
न्पञ्चापि साधनचतुष्टयमाशु दत्त्वा ।
बुद्धिं विचारपरमां प्रविधाय सम्य-
क्श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३ ॥

बद्ध्वा त्वदङ्घ्रिसरसीरुहभक्तिरज्ज्वा
चेतःकपिं विषयकण्टकपादपेषु ।
छायाफलादिरहितेषु वृथा चरन्तं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ४ ॥

प्राणैर्विहीनतनयं तरसा समीप-
मानीय रोदनकरौ पितरौ समीक्ष्य ।
यः प्रातनोदसुयुतं तनयं हि स त्वं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ५ ॥

भट्टादिभास्करसितेतरकण्ठमुख्या-
न्वादे विजित्य कुतुकाद्विदुषां वरेण्यान् ।
अद्वैतमार्गपरिरक्षणजागरूक
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ६ ॥

श्रीमत्प्रणीतशुकतातमुनीन्द्रसूत्र-
भाष्यादिपाठनविधावधिकं पटुत्वम् ।
दत्त्वापि शून्यपरिमाणजडत्ववार्धेः
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ७ ॥

भाष्याख्यपुष्परसपूर्णमुखारविन्द-
नम्रान्तरङ्गमधुकृत्परितुष्टिदक्ष ।
रुद्राक्षकण्ठ निजनीलगलत्वसिद्ध्यै
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ८ ॥

आस्तिक्यरत्नमिह पुण्यचयेन लभ्यं
कल्यम्बुधौ निपतितं तरसार्यपाद ।
उद्धृत्य तेन परिपालय लोकमेनं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ९ ॥

योगप्रदायक जवान्नतमस्करिभ्यो
भोगप्रदाथ गृहिणामविरक्तिभाजाम् ।
कालस्मयापह विपापजनेड्यपाद
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ १० ॥

छिन्नेऽपि शस्त्रनिचयैर्बहुधा शरीरे
खेदं न कंचिदपि याति यथा मनो मे ।
तद्वत्स्थिरां कुरु मतिं सुखचित्स्वरूपे
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ११ ॥

अन्यैर्भिषग्भिरनिवार्यमहामयं मे
यस्मात्त्वमाद्यभिषगस्यचिरान्निवार्य ।
अज्ञानसंज्ञमतिनिश्चलबोधदाना-
च्छ्रीशंकरार्य मम देहि पदावलम्बम् ॥ १२ ॥

वातावधूतवरुणालयभङ्गगर्व-
भङ्गप्रचण्डवचसः प्रभवन्ति यत्ते ।
मूका अपि प्रणमनात्पदयोः सकृत्त-
च्छ्रीशंकरार्य मम देहि पदावलम्बम् ॥ १३ ॥

लीनं तथा कुरु मनः परमार्थवस्तु-
न्यैक्यावबोधनवशान्मम निःसरेन्न ।
यद्वत्पुनः परमकारुणिकाग्रगण्य
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ १४ ॥

संन्यासिनां हि विषवद्विषयेषु बुद्धिं
तन्वंस्तथा च गृहिणां शुभकर्मवाञ्छाम् ।
सर्वान्क्रमेण च परं पदमापयंस्त्वं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ १५ ॥

यत्पादपङ्कजनतेरपि जातु मूक-
लोकोऽपि दिव्यकवितामयते हि तूर्णम् ।
स त्वं तव स्तुतिकृते कवितां वितीर्य
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ १६ ॥

आकर्ण्य दीनगृहिणीवचनं कृपार्द्रः
स्वर्णात्मकामलकसंततिमासमन्तात् ।
गेहस्य योऽतितरसा हि ववर्ष स त्वं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ १७ ॥

आनेष्ट दूरगनदीं जननीहिताय
यो बाल्य एव जगतां हितकृत्स्वभावः ।
स त्वं समस्तजनरक्षणबद्धदीक्ष
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ १८ ॥

मोहाद्वृथा विरसगन्धविहीनशब्द-
स्पर्शाख्यपुष्पचलनादतिखेदभाजम् ।
हृद्भृङ्गमात्मपदपद्मगतं विधाय
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ १९ ॥

सर्वान्स्वकीयमततत्त्वपरीक्षणेच्छूं-
स्तत्तन्मतार्थकथनेन विजित्य मोदम् ।
सर्वज्ञपीठमधिरुह्य य आप स त्वं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २० ॥

शान्त्यादिसाधनवता पुरुषोत्तमेन
संप्राप्य सद्गुरुमतः श्रवणादि कृत्वा ।
यः प्राप्यते विमलबोधतनुर्हि स त्वं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २१ ॥

श्रीनाथशंभुविधिशुद्धपरात्मरूप
काशान्तचञ्चलहृदां पदसंनतानाम् ।
पाषाणनिश्चलमनस्त्वनिधानदक्ष
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २२ ॥

राजीवपादमुखलभ्यमनन्तपुण्यै
राजाधिराजनिचयार्थितमन्त्रहं च ।
निर्व्याजपूर्णकृपयास्य वराकराजः
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २३ ॥

वाचोऽपि चित्तसहिता न हि यत्र गन्तुं
शक्ष्यन्ति तद्विषयतां कथमेति वस्तु ।
त्यक्त्वा कृपां गुरुवरस्य हि चित्स्वरूप
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २४ ॥

जाड्याम्बुधौ निरवधौ दृढमग्नमग्न-
मत्यन्तविस्मृतचिदात्मसुखस्वरूपम् ।
उद्धृत्य धीरशनया तरसा कृपाब्धे
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २५ ॥

हस्ताम्बुजं शिरसि हेतुविहीनपूर्ण-
कारुण्यतोऽतितरसा विनिधाय मत्के ।
स्वाराज्यमाशुवितरात्मपदेऽभिषिच्य
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २६ ॥

माता पिता च भगिनी तनुजश्च जाया
नैवाश्रयाय पुरुषस्य भवन्ति काले ।
एकं विना गुरुवराङ्घ्रिपयःप्रभूतं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २७ ॥

संप्राप्तयोगसरणिं सदसद्विवेक-
दक्षं दमादिगुणसंभृतमानसं च ।
कृत्वा सरोजभवचित्तपयोज भानो
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २८ ॥

श्रीशंकरेति सततं परिकीर्तयन्ति
पादाम्बुजं परगुरोर्हृदि चिन्तयन्ति ।
ये वै त एव सुखिनः पुरुषा हि लोके
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २९ ॥

मात्सर्यमुख्यभयहेतुमृगावकीर्णे
संकल्पनामकमहाजवपक्षियुक्ते ।
स्वान्ताख्यघोरविपिने चरतः कृपाब्धे
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३० ॥

वर्णाश्रमादिपरिपालनसक्तिमाशु
दत्त्वा दृढां नृपततेरपि भूयसीं च ।
श्रद्धां श्रुतिस्मृतिततिष्वचलां च लक्ष्मीं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३१ ॥

आदौ तु साधनचतुष्टयहेतुभूतं
पश्चाच्छ्रुतार्थपरिचिन्तनसाधनं च ।
अन्ते च दृश्यरहितात्मसुखप्रदं ते
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३२ ॥

विद्यानिधे विशदितानतचित्तपद्म
विद्याप्रदाननिरताङ्घ्रिसरोजपूज ।
विष्ण्वीशभेदमतिवारणपञ्चवक्त्र
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३३ ॥

दक्षेण पाणिकमलेन विबोधमुद्रा-
मन्येन नम्रवरदानसमर्थचिह्नम् ।
बिभ्राण पद्मनिभनेत्र कृपाम्बुराशे
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३४ ॥

श्रीकालटीधरणिभूषणभूतजन्मन्
जन्मादिदुःखविनिवारणबद्धदीक्ष ।
कारुण्यपूर्णनयनावनिदेवभाग्य
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३५ ॥

वेदाविरुद्धमतसाधनबद्धदीक्ष
वादे विजित्य तरसा क्षितिमण्डलं यः ।
अद्वैतरक्षणमहो कृतवांश्च स त्वं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३६ ॥

तत्त्वार्थबोधनविहीनहृदम्बुजस्य
रागादिदोषपरिपूरितचेतसो मे ।
तत्त्वं विबोध्य विनिवार्य च रागरोगं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३७ ॥

**इति श्रीशंकरार्यपदावलम्बस्तवः संपूर्णः ॥**



॥ श्रीः ॥

श्रीकालटिक्षेत्रे

# श्रीशंकरार्यपदावलम्ब-
# सुवर्णमालास्तुतिः ॥



ओंकारपङ्कजमधुव्रत वेदशीर्ष-
कञ्जातबालदिननाथ कृपासमुद्र ।
वृन्दारकेन्द्रपदतौच्छ्यमनःप्रदायि-
न्श्रीशंकरार्य मम देहि पदावलम्बम् ॥ १ ॥

नत्वा पदाम्बुजनियुग्ममहो यदीयं
वाचस्पतित्वमधिगच्छति जन्ममूकः ।
स त्वं कृपार्णव सरोरुहपत्रनेत्र
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ २ ॥

मत्तो मनःप्रभव एष पुरा यदीय-
नेत्राग्निनाप तरसा भासितस्वभावम् ।
स त्वं विरक्तिमचलां प्रवितीर्य मह्यं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ३ ॥

शंकानिवारणपटो प्रणतव्रजस्य
यं कालकाल इति कुम्भभवो जगाद ।
स त्वं वितीर्य परमायुरभीष्टपूगं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ४ ॥

कन्येव रूपगुणशालिनमादरेण
मर्त्यं प्रमोदभरतः स्वयमेव मुक्तिः ।
यद्वाक्सुधाप्रणयिनं वृणुते हि स त्वं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ५ ॥

राजाधिराजपदवीं तरसा प्रयाति
यत्पादपङ्कजयुगं सकृदेव नत्वा ।
दीनाग्रयाप्यपि विना कमपि प्रयत्नं
श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ६ ॥

यत्यप्रयायिजनतावनबद्धदीक्ष
   तत्त्वं प्रबोध्य तरसा बहुलैः स्वकीयैः ।
ग्रन्थैश्च पूर्णकरुणाभरितैः कटाक्षैः
   श्रीशंकरार्य मम देहि पदावलम्बम् ॥ ७ ॥

स्तोत्रं त्वदङ्घ्रिकमलाळितमानसेन
   सूक्तं पठेद्य इह भक्तियुतान्तरङ्गः ।
पात्रं भवेत्स खलु सर्वसुखस्य सत्यं
   न द्वापरोऽत्र विषये मनसापि कार्यः ॥ ८ ॥

इति श्रीशंकरार्यपदावलम्बसुवर्णमालास्तुतिः संपूर्णा ॥



॥ श्रीः ॥

श्रीकालटिक्षेत्रे

# ॥ श्रीशंकराचार्यस्तोत्रकदम्बम्



चिन्मुद्रां दक्षहस्ते प्रणतजनमहाबोधदात्रीं दधानं
वामे नम्रेष्टदानप्रकटनचतुरं चिह्नमप्यादधानम् ।
कारुण्यापारवार्धिं यतिवरवपुषं शंकरं शंकरांशं
चन्द्राहंकारहुंकृत्स्मितलसितमुखं भावयाम्यन्तरङ्गे ॥

बीजमिदं मत्पाद-
प्रपतनमखिलेप्सितार्थपूगस्य ।
इति बोधनाय धत्से
चिन्मुद्रां किं यतीशान ॥ २ ॥

मायावशाज्जगदिद-
मनुक्षणं भिन्नभिन्नमाभाति ।
इति बोधनाय गुरुरा-
डरूपमपि रक्तमम्बरं धत्से ॥ ३ ॥

यतिवेषधरणकाले
  त्यक्ता नागेश्वराः किं त्वाम् ।
अधुना मालाव्याजा-
  त्सेवन्ते शंकर ब्रूहि ॥ ४ ॥

गुरुवर पाहि सदा मां
  नतवरवरदानचण्ड धृतदण्ड ।
अकलङ्कक्षयहीन-
  स्वयशश्चन्द्रप्रकाशिताशान्त ॥ ५ ॥

सोमसदृक्षमुखाब्जं
  कोमलपदयुग्मविजितकञ्जातम् ।
सीमविहीनकृपाब्धिं
  श्यामग्रीवावतारगुरुमीडे ॥ ६ ॥

शंकरगुरुराङ्गगन
  हंसाद्यैः पक्षिभिः सदा सेव्यम् ।
करुणामारुतपूरित-
  मनिशं ध्यायामि हृत्सरोजेऽहम् ॥ ७ ॥

अज्ञानाभिधवृत्रगर्वहरणं विज्ञानवज्रोल्लस-
त्पाणिं काममुखासुरक्षयकरं स्वात्माभिधस्वर्गदम्
किंच प्रौढविवेकनामकजयन्तोद्यन्निजोत्सङ्गकं
श्रीमच्छंकरनामकं हृदि सदा कुर्वे यतीन्द्रं मुदा ॥

शंकरगुरुराट्ताक्ष्यं
पापोरगदर्पचर्वणधुरीणम् ।
लब्धाकाशगतिप्रद-
मनिशं प्रणमामि नित्यवियदाप्त्यै ॥ ९ ॥

अज्ञोऽप्यश्रुतशास्त्रा-
ण्याशु किल व्याकरोति यत्कृपया ।
निखिलकलाधिपमनिशं
तमहं प्रणमामि शंकराचार्यम् ॥ १० ॥

विलोक्य त्वामब्जं शिरसि निदधानं हि सततं
पयोजं चाप्यागाद्वहति कृपया मामपि गुरुः ।
अहं चाप्यब्जं खल्वत इति तदाशानुसरणा-
त्पयोजं धत्से किं शिरसि वद नम्राय यतिराट् ॥

आधारादिषडम्बुजानि गुरुणा योगेन भित्त्वा चिरा-
न्छीर्षस्थं च सहस्रपत्रजलजं संप्राप्य सौख्यं परम् ।
यत्प्राप्स्यन्ति तदाशु मत्प्रणमनाद्भूयादिति ख्यापनं
कर्तुं फुल्लसरोजसप्तकमहो धत्से गुरूणां गुरो ॥

अष्टाङ्गयोगमचिरा-
ल्लभते मत्पादनम्रलोका इति ।
बोधयितुं धत्से किं
कमलान्यष्टौ गुरो ब्रूहि ॥ १३ ॥

अणिमादिसिद्धिलक्ष्म्यो
वरयन्त्यष्टापि सत्वरं भक्तम् ।
इति बोधनाय जगतां
धत्से कमलाष्टकं गुरो ब्रूहि ॥ १४ ॥

फाले नेत्रं गरलगलतां चेदहं धारयामि
स्युर्भीता मे नतजनवरा नैव सामीप्यमीयुः ।
इत्येतेषां भयहृतिकृते नेत्रयुग्मं सितां किं
ग्रीवां धत्से यतिवर शिव ब्रूहि नम्राय मह्यम् ॥

भासते हृदि सदा परमात्मा
संवसन्ति निगमाश्च मुखाब्जे ।
यत्पदप्रणमनाज्जनताया-
स्तं नमामि सततं यतिवीरम् ॥ १६ ॥

वाञ्छितं मम जवाद्वितरार्य
प्राणदानचतुरोऽसि मृतस्य ।
अप्यसाध्यमिह तेऽस्ति जगत्यां
किं वदाशु गुरुशंकर मह्यम् ॥ १७ ॥

जन्ममृत्युहरणीं तव वक्त्रा-
म्भोजनिःसृतसुधां न पिबामि ।
भाष्यसंज्ञलसितां वितरारं
देशिकेन्द्र मम पाण्यवलम्बम् ॥ १८ ॥

मायामयाशेषविशेषशून्य
मानातिगस्वप्रभ चित्स्वरूप ।
देहेन्द्रियप्राणमनोविदूर
श्रीशंकर त्वत्पदयोः पतामि ॥ १९ ॥

आसेतुशीताचलमध्यवर्ति-
जनान्निजाचारपरान्विरच्य ।
सौख्यं प्रयच्छाशु च सर्वकार्ये-
ष्वेषां कृपासागर शंकरार्य ॥ २० ॥

करोमि कायेन तवाङ्घ्रिसेवां
ब्रवीमि वाचा तव पुण्यनाम ।
ध्यायामि मूर्तिं तव हृत्सरोजे
प्रसीद शीघ्रं यतिराज मह्यम् ॥ २१ ॥

एकान्तवासादरमात्मनिष्ठा-
मनन्यदेवत्वमजामितां च ।
त्वत्काखिलग्रन्थविलोकने त्वं
दत्त्वा यतीनां वर पाहि नम्रम् ॥ २२ ॥

कदापि कुत्रापि किमप्यकार्यं
नाहं प्रकुर्यां बहु हिंसितोऽपि ।
यथा तथा मानसदार्ढ्यमाशु
दत्त्वा गुरूणां वर पाह्यमुष्मै ॥ २३ ॥

घोरापस्मृतिमुख्यरोगनिचयाहंकारमाराज्जवा-
त्कुर्वाणं नतलोकरक्षणचणं योगप्रदं सत्वरम् ।
देवप्रार्थनयात्तभूतलगतिं धर्मैकसंस्थापन-
व्यग्रं शंकरदेशिकं हृदि सदा कुर्वे मनःशुद्धये ॥

उद्यद्भानुसहस्रगर्वहरणप्राशस्त्ययुग्वस्त्रधृ-
क्सङ्ख्याहीनशमादिसद्गुणगणैरत्यादरात्सेवित ।
श्रीमत्पद्मपदामरेशकरधात्र्याद्यैर्विनेयैर्युत
श्रीमच्छंकरदेशिकेन्द्र चरणालम्बं प्रयच्छाशु मे ॥

मय्यप्रार्थितमेव ते प्रसरतु व्याजानपेक्षा कृपा
पापानां श्वपचैर्भियापि परया तद्वज्जुगुप्सावशात् ।
त्यक्तानां सदनेऽपि तेन महती स्यात्ते समज्ञा प्रभो
किं रात्रिंदिवपुण्यकर्तृषु कृपाधानेन भूयाद्गुरो ॥

शुद्धाद्वैतपथस्य पालनकृते पूर्वं त्वया स्थापित-
स्थानेष्वन्यतमस्थशिष्यततिगस्तत्कार्यकृत्यक्षमः ।
अज्ञानां धुरि कीर्तनीयचरितो नाद्यापि विद्यालय-
स्तस्मात्स्थानमिदं गुरूत्तम कृपावार्धे त्वमेवाश्रय ॥

यद्वा दुर्मतभेदपाटववतीं मेधां नवोन्मेषिणीं
त्रिद्यामाश्रुतशास्त्रपाठनचणां दद्या द्रुतं चेद्गुरो ।
साहाय्यं च सुधन्वपार्थिवसदग्राजावलेस्तर्ह्यहं
त्वद्दीक्षाबलतो यते यतिपते तत्त्वाध्वसंवृद्धये ॥ २८ ॥

इति श्रीशंकराचार्यस्तोत्रकदम्बं संपूर्णम् ।



॥ श्रीः ॥

# श्रीशंकराचार्यसुवर्णमाला-स्तवराजः ॥



ओंकारार्थविबोधनचतुरं
करुणार्द्रनयनकञ्जातम् ।
माण्डूक्यकारिकाम्बुज-
बालरविं नौमि शंकराचार्यम् ॥ १ ॥

नयनजितपङ्कजातं
नतनयनाम्भोधिपूर्णचन्द्रमसम् ।
नवनीततुल्यहृदयं
नौमि सदा शंकराचार्यम् ॥ २ ॥

मथितमदमानमार-
प्रभृतिबलिष्ठारिसर्वगर्वमहम् ।
मनसा स्मरामि सततं
विरतिप्रदमाशु शंकराचार्यम् ॥ ३ ॥

शंकरपरावतारं
किङ्करपापौघपाटनपटिष्ठम् ।
पङ्कजपादमुखेड्यं
तं कलये शंकराचार्यम् ॥ ४ ॥

कमलोद्भवरूपान्तर-
मण्डनमिश्रान्तरङ्गशुद्धिचणम् ।
शितिकण्ठापररूपं
शिरसा प्रणतोऽस्मि शंकराचार्यम् ॥ ५ ॥

रागादिविषयविमुखी-
करणसमर्थात्मवाक्ततिश्रवणम् ।
भूमानन्दप्रदपद-
नमनं प्रणमामि शंकराचार्यम् ॥ ६ ॥

यतिपतिपूजितपादं
नतिमात्रप्रापितात्मदृढबुद्धिम् ।
श्रीशेशांशप्रभवं
श्रीमन्तं नौमि शंकराचार्यम् ॥ ७ ॥

शंकरगुरुवरकरुणा-
लेशास्पदतास्वरूपयोग्येन ।
रचिता स्तुतिर्गुरूणां
प्रीत्यै भूयाद्यतिब्रुवेणेयम् ॥ ८ ॥

इति श्रीशंकराचार्यसुवर्णमालास्तवराजः संपूर्णः ॥



॥ श्रीः ॥

# ॥ श्रीगुरुपादुकास्तोत्रम् ॥



नालीकनीकाशपदादृताभ्यां
नारीविमोहादिनिवारकाभ्याम् ।
नमज्जनाभीष्टततिप्रदाभ्यां
नमो नमः श्रीगुरुपादुकाभ्याम् ॥ १ ॥

शमादिषट्कप्रदवैभवाभ्यां
समाधिदानव्रतदीक्षिताभ्याम् ।
रमाधवाङ्घ्रिस्थिरभक्तिदाभ्यां
नमो नमः श्रीगुरुपादुकाभ्याम् ॥ २ ॥

नृपालिमौलिव्रजरत्नकान्ति-
सरिद्विराजज्झषकन्यकाभ्याम् ।
नृपत्वदाभ्यां नतलोकपङ्क्ते-
र्नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ३ ॥

अनन्तसंसारसमुद्रतार-
नौकायिताभ्यां गुरुभक्तिदाभ्याम् ।
वैराग्यसाम्राज्यदपूजनाभ्यां
नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ४ ॥

पापान्धकारार्कपरंपराभ्यां
तापत्रयाहीन्द्रखगेश्वराभ्याम् ।
जाड्याब्धिसंशोषणबाडबाभ्यां
नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ५ ॥

कवित्ववाराशिनिशाकराभ्यां
दारिद्र्यदावाम्बुदमालिकाभ्याम् ।
दूरीकृतानम्रविपत्ततिभ्यां
नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ६ ॥

नता ययोः श्रीपतितां समीयुः
कदाचिदप्याशु दरिद्रवर्याः ।
मूकश्च वाचस्पतितां हि ताभ्यां
नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ७ ॥

कामादिसर्पव्रजभञ्जकाभ्यां
विवेकवैराग्यनिधिप्रदाभ्याम् ।
बोधप्रदाभ्यां द्रुतमोक्षदाभ्यां
नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ८ ॥

स्वार्चापराणामखिलेष्टदाभ्यां
स्वाहासहायाक्षधुरन्धराभ्याम् ।
स्वान्ताच्छभावप्रदपूजनाभ्यां
नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ९ ॥

इति श्रीगुरुपादुकास्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीगुरुस्तुतिः ॥



गुरुवरकरुणां हित्वा
को वा स्वेष्टं लभेत लोकोऽस्मिन् ।
तस्माद्गुरुवरचरणं
भज चेतः सर्वसौख्यमूलं त्वम् ॥ १ ॥

गुरुवर करुणासागर
तरुणारुणवस्त्रसंवृताङ्ग विभो ।
कुरु करुणां मयि दीने
सुरवरतरुगर्वहरणनिपुणकर ॥ २ ॥

हित्वा तव चरणं मम
शरणं जानासि नान्यदस्तीति ।
गुरुवर नृसिंह तस्मा-
त्पालय बुद्धिं सुनिश्चलां दत्त्वा ॥ ३ ॥

बहुशः कृतपापमपि
　क्रियमाणाघं गुरो पाहि ।
दोषाकरमपि शंभु-
　र्धत्ते शीर्षे न किं ब्रूहि ॥ ४ ॥

नावोचः किं पूर्वं
　त्वमपि भवेः श्रीसदाशिवेन्द्राभः ।
इति कस्मान्मम ममता
　देहे जागर्ति गुरुवर ब्रूहि ॥ ५ ॥

स्वप्ने ममोत्तमाङ्गे स्वय-
　माहूयातिकरुणया चरणौ ।
दधतस्तव निकटे मम
　गुरुवर नरसिंह याचना कास्ति ॥ ६ ॥

स्वप्नेऽपि रामनिकटे
　मच्छ्रेयः प्रार्थनाकर्तुः ।
गुरुवर तव निकटे मम
　कर्तव्या प्रार्थना कास्ति ॥ ७ ॥

नरसिंहापररूपे
मत्पालनबद्धकङ्कणे भवति ।
जाग्रति सति मम निकटे
गुरुवर भीतिर्भवेत्कस्मात् ॥ ८ ॥

कुत्र गतोऽत्रैवाहं
तिष्ठामीत्यभयवितरणव्यग्रे ।
भवति भवतापहारिणि
गुरुवर भीतिः कुतस्त्या मे ॥ ९ ॥

त्वच्चरणभक्तिपूरित-
मानसमेनं गुरो विधायाशु ।
सकलभयशून्यहृदयं
कुरु करुणावारिधे नृसिंहगुरो ॥ १० ॥

प्रणताद्वैतविबोधन-
मचिरात्कर्तुं गिरेव नाम्ना च ।
स्वीकृतनरसिंहाभिध-
मनिशं कलयामि गुरुवरं कंचित् ॥ ११ ॥

प्रत्यक्षं बहुकरुणं
प्रविहाय त्वां गुरोऽन्यभजनं मे ।
करसंस्थान्नविसर्जन-
पूर्वकभिक्षाटनं न किमु ॥ १२ ॥

नैसर्गिककरुणाजनि-
भूमौ मन्मूर्तिमद्भाग्ये ।
त्वय्यपराधा मत्का
गुरुवर कुर्वन्ति कल्मषं किं भो ॥ १३ ॥

चित्तं मामकमनिशं
सच्चित्सुखरूपगं दृढं प्रभवेत् ।
यद्वत्तथाशु कृत्वा
पालय सततं नृसिंहगुरो ॥ १४ ॥

विकृतिर्नैव मम स्या-
त्कायेऽस्मिंश्छिद्यमानेऽपि ।
चित्ते यथा तथा त्वं
कुरु करुणावारिधे नृसिंहगुरो ॥ १५ ॥

सच्चित्सुखरूपोऽहं
नैवेदं दृश्यमित्यचलाम् ।
बुद्धिं प्रयच्छ मह्यं
करुणामृतवारिधे नृसिंहगुरो ॥ १६ ॥

अपुनःस्मरणं लोकं
देहं शास्त्रं च विस्मृत्य ।
आनन्दं निरवधिकं
प्राप्नोमि कदा नृसिंहगुरो ॥ १७ ॥

स्थूले सूक्ष्मे हेतौ
देहेऽहंतां समुत्सृज्य ।
चिद्रूपेऽहंता मे
समुदेति कदा नृसिंहगुरो ॥ १८ ॥

इति श्रीगुरुस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीगुरुसुवर्णमालास्तोत्रम् ॥



श्रीमातृचिन्तनरतः
श्रीशाङ्करभाष्यजलधिराकेन्दुः ।
श्रीबोधदाननिरतः
श्रीमान्मम मनसि देशिकः स्फुरतु ॥ १ ॥

नृपमौलिराजिताङ्घ्रि-
र्नृहरिपदाम्भोजपूजनासक्तः ।
नृवराराधितचरणो
नृत्यतु गुरुराण्मदीयहृद्रङ्गे ॥ २ ॥

सिन्धुरसमानगमनः
सिन्धुतरङ्गाभनैजवाक्प्रसरः ।
सिंहः प्रतिवादिगजे
सिन्दूरसदृक्षवस्त्रयुग्जयति ॥ ३ ॥

हसितविनिर्जितचन्द्रो
हरिदन्तविराजमानसत्कीर्तिः ।
हरतादघमखिलं मे
हतरिपुषट्कः सदानन्दः ॥ ४ ॥

भाति नरोऽल्पविदां
यो भास्त्येव प्रकृष्टबुद्धीनाम् ।
भाधीशतुल्यकान्ति-
र्भातु स मे चित्तसरसिजे गुरुराट् ॥ ५ ॥

रतिरमणगर्वहारी
रजताचलसदनसक्तचेतस्कः ।
रचयतु मम हृदयाब्जं
रजसा तमसा विहीनमाशु गुरुः ॥ ६ ॥

तीर्णभववारिराशि-
स्तीर्थाटनलोलहृदयकञ्जातः ।
तीव्राज्ञानमिदं मे
तीर्थेट् शमयेद्द्रुतं दयया ॥ ७ ॥

जडताम्बुधिबडबाग्नि-
जनकमहीपादितुल्यबोधयुतः ।
जनयतु तत्त्वज्ञानं
जगदेकगुरुर्नृसिंहयतिराण्मे ॥ ८ ॥

यतिपतिनिषेव्यपादो
यमनियमाद्यङ्गयुक्तयोगज्ञः ।
यमभयवारणदक्षो
यच्छतु मह्यं गुरूत्तमो योगम् ॥ ९ ॥

तिष्ठति यदीयचित्तं
तिर्यग्बुधाग्रिमेषु समदर्शि ।
तिर्यक्त्रिपुण्ड्रफाल-
स्तिरयतु सोऽन्तर्बहिश्च शत्रून्मे ॥ १० ॥

इति श्रीगुरुसुवर्णमालास्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीनरसिंहभारतीपादाष्टकम्



श्रीकीर्तिप्रतिभानां
भवनं भविता यदीयपदनत्या ।
तान्दासीकृतभूपा-
न्वन्दे नरसिंहभारतीपादान् ॥ १ ॥

चित्रं यन्मुखचन्द्रा-
लोकाद्विकसन्ति चित्तपद्मानि ।
शिष्याणामनिशं ता-
न्वन्दे नरसिंहभारतीपादान् ॥ २ ॥

सरसान्कावतासारा-
न्वर्षत्यास्येषु नम्रजनतायाः ।
यदपाङ्गवारिदस्ता-
न्वन्दे नरसिंहभारतीपादान् ॥ ३ ॥

एनःपर्वतभेदे
शतकोटिधुरं दधाति यद्भक्तिः ।
पापाब्धिबाडबांस्ता-
न्वन्दे नरसिंहभारतीपादान् ॥ ४ ॥

यद्वाक्श्रुतिर्नराणां
भवसागरतारणे नौका ।
शीलितनिगमान्तांस्ता-
न्वन्दे नरसिंहभारतीपादान् ॥ ५ ॥

त्रासितकामगजेन्द्रा-
न्स्ववचश्चातुर्यतोषितार्यजनान् ।
क्रोधाहिवैनतेया-
न्वन्दे नरसिंहभारतीपादान् ॥ ६ ॥

वितरणधिक्कृतकर्णा-
न्क्षमया निर्धूतमेदिनीगर्वान् ।
विरतिविधूतार्यशुका-
न्वन्दे नरसिंहभारतीपादान् ॥ ७ ॥

यत्पादाम्बुजभक्ति-
स्तत्त्वप्रासादगमननिःश्रेणी ।
तान्नतसुखाब्धिचन्द्रा-
न्वन्दे नरसिंहभारतीपादान् ॥ ८ ॥

भूषितविभाण्डकात्मज-
जनिभूमीन्कीर्तिराजितदिगन्तान् ।
विश्वोत्तंसितपादा-
न्वन्दे नरसिंहभारतीपादान् ॥ ९ ॥

स्तुतिमेनां गुरुकृपया
रचितामवनावहर्निशं पठताम् ।
करुणानीरधयः स्यु-
र्हृष्टा नरसिंहभारतीपादाः ॥ १० ॥

इति श्रीनरसिंहभारतीपादाष्टकं संपूर्णम् ॥



॥ श्रीः ॥

# श्रीनृसिंहभारतीपाद-
# सुवर्णमालास्तवराजः ॥



ओंकारमन्त्रराज
प्रजपनसंसक्तमानसाम्भोजान् ।
त्रिजगच्छ्लाघितचरिता-
न्वन्दे नरसिंहभारतीपादान् ॥ १ ॥

नवनवकावत्वजनन-
प्रवणान्मूकेऽपि पादनम्रजने ।
नयनजितारुणकञ्जा-
न्वन्दे नरसिंहभारतीपादान् ॥ २ ॥

मोहनिवारणचतुरा-
ञ्छ्रुत्यन्तार्थप्रबोधकैर्वचनैः ।
मोदितनतनरनिकरा-
न्वन्दे नरसिंहभारतीपादान् ॥ ३ ॥

नृपपशुपजडविदग्ध-
प्रस्तरकलधौतसमहृदम्भोजान् ।
नृहरिपदार्चनसक्ता-
न्वन्दे नरसिंहभारतीपादान् ॥ ४ ॥

सिंहधुरन्धरहृदया-
न्कामक्रोधेभगर्वनिर्भेदे ।
सिन्दूरशोणवसना-
न्वन्दे नरसिंहभारतीपादान् ॥ ५ ॥

हरिहरसमानबुद्धी-
न्विरहविहीनांश्चिदात्मताबुद्ध्या ।
हसितजितकुन्दकान्ती-
न्वन्दे नरसिंहभारतीपादान् ॥ ६ ॥

भागीकृतपुण्यौघा-
न्सुहृदरिवर्गे क्रमेण निःशेषम् ।
भारतजनपुण्यनिधी-
न्वन्दे नरसिंहभारतीपादान् ॥ ७ ॥

रत्नलसत्कुक्षिगणेद्
चन्द्रशिरःशारदाम्बिकार्चनतः ।
रचितजगच्छुभपङ्क्ती-
न्वन्दे नरसिंहभारतीपादान् ॥ ८ ॥

स्यै प्रयाद्यायै येषां
न भवन्तीशाजहरिपदान्यपि भो ।
तांस्तूलीकृतविश्वा-
न्वन्दे नरसिंहभारतीपादान् ॥ ९ ॥

जगदाचार्यनृसिंह-
प्रसादलेशात्तबुद्धिकणिकेन ।
शिष्यब्रुवेण तेषां
रचितः स्तव एष जयतु तत्कृपया ॥ १० ॥

इति श्रीनरसिंहभारतीपादसुवर्णमालास्तवराजः संपूर्णः ॥



|| श्रीः ||

# || श्रीविद्यातीर्थाष्टकम् ||



वर्णचतुष्टयमेत-
  द्विद्यातीर्थेति यस्य जिह्वाग्रे ।
विलसति सदा स योगी
  भोगी च स्यान्न तत्र संदेहः || १ ||

लम्बिकायोगनिरत-
  मम्बिकापतिरूपिणम् ।
विद्याप्रदं नतौघाय
  विद्यातीर्थमहेश्वरम् || २ ||

पापान्धकारसूर्यं
  तापाम्भोधिप्रवृद्धबडबाग्निम् ।
नतहृन्मानसहंसं
  विद्यातीर्थं नमामि योगीशम् || ३ ||

पद्यावलिर्मुखाब्जा-
दयत्नतो निःसरेच्छीघ्रम् ।
हृद्या यत्कृपया तं
विद्यातीर्थं नमामि योगीशम् ॥ ४ ॥

भक्त्या यत्पदपद्मं
भजतां योगः षडङ्गयुतः ।
सुलभस्तं करुणाब्धिं
विद्यातीर्थं नमामि योगीशम् ॥ ५ ॥

हृद्या विद्या वृणुते
यत्पदनम्रं नरं शीघ्रम् ।
तं कारुण्यपयोधिं
विद्यातीर्थं नमामि योगीशम् ॥ ६ ॥

विद्यां दत्त्वाविद्यां
क्षिप्रं वारयति यः प्रणम्राणाम् ।
दयया निसर्गया तं
विद्यातीर्थं नमामि योगीशम् ॥ ७ ॥

विद्यारण्यप्रमुखै-
विद्यापारंगतैः सेव्यम् ।
अद्यापि योगनिरतं
विद्यातीर्थं नमामि योगीशम् ॥ ८ ॥

विद्यातीर्थाष्टकमिदं
पठन्भक्तिपुरःसरम् ।
विद्यामनन्यसामान्यां
प्राप्य मोदमवाप्नुयात् ॥ ९ ॥

इति श्रीविद्यातीर्थाष्टकं संपूर्णम् ॥



श्रीविद्याशंकरोत्सवे

# ॥ श्रीविद्याशंकरपञ्चरत्नस्तवः ॥



विद्याशंकर मां त्वं
 विद्याशं कुरु सदैव करुणाब्धे ।
विद्या शं कुरुते खलु
 विद्या शङ्कां छिनत्ति चित्तस्थाम् ॥ १ ॥

चिन्तयतो हृदयाब्जे
 योगीन्द्रस्यास्य योगबलात् ।
पुरतः प्रादुरभूतां
 किं करुणाब्धी गिरीन्द्रजाशंभू ॥ २ ॥

सालंकाररमापतेर्हृदि सदा ध्यानात्कृतात्सादरं
 तादात्म्यं किमु योगिशेखर समापन्नोऽसि नूनं गुरो ।
नो चेद्दूरनिरस्तसर्वविभवस्याशाम्बरस्याप्यहो
 चित्रं भूषणजालमाततमिदं कस्मात्समागाद्वद ॥ ३ ॥

विद्यातीर्थ कृपाम्बुधे कलिमलप्रध्वंसनैकव्रत
प्रज्ञादानसुदीक्षित प्रणमतां मां सर्वमित्रैर्युतम् ।
पाह्यम्ब्वग्निनृपादिजन्यभयतस्तद्वच्च रोगादितो
दत्त्वायुष्यमरोगतां च दृढतां विद्यां च लोकोत्तराम् ॥

विद्यादाननिबद्धदीक्ष करुणावारांनिधे सद्गुरो
विद्यातीर्थ ममादिशस्व सुखदं योगं द्रुतं सिद्धिदम् ।
यस्माच्छीघ्रमहं प्रपद्य सकलाः सिद्धीश्च विद्यास्तथा
स्वात्मानन्दनिमग्नचित्तसरसीजातो भवेयं सदा ॥

इति श्रीविद्याशंकरपञ्चरत्नस्तवः संपूर्णः ॥



॥ श्रीः ॥

# ॥ श्रीविद्यातीर्थपदारविन्दस्तुतिः ॥



संसाराम्बुधिमग्नलोकविततेः पोतं यदाहुर्विदः
कंसारातिपुरारिभेदमतिहृत्स्वार्चापराणां चिरम् ।
विद्यारण्यमुखैर्महामुनिवरैः संपूजितं तन्मुदा
विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ १ ॥

हृद्या पद्यततिर्मुखाब्जकुहराद्यत्पूजकानां जवा-
न्निर्गच्छत्यमरापगेव सरसा स्वच्छापि तद्भक्तितः ।
तुङ्गाभिख्यनदीतटान्तविलसच्छ्रीमन्दिरे संस्थितं
विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ २ ॥

शृङ्गाभिख्यमहीधरेन्द्रनिवसल्लोकान्वराकानपि
व्याजात्प्राप्तनिजेक्षणान्करुणया पुण्यौघयुक्तांस्तथा ।
कुर्वद्भक्तिभृतान्तरङ्गकमलानप्याशु यत्तन्मुदा
विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ ३ ॥

यत्प्रीतिप्रतिपित्सुभिर्हरिहराभिख्याद्यभूपालकै-
विप्रेभ्यः श्रुतिविद्भ्य एव बहवो ग्रामा विसृष्टाः पुरा ।
तद्राजव्रजवन्द्यमानमनिशं राजाधिराजत्वदं
विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ ४ ॥

यत्प्रीत्यर्थमतीव सुन्दरतमं श्रीयन्त्रतुल्यं गृहं
बुक्कक्ष्मापतिवंशजेन धरणीशानेन निर्मापितम् ।
तन्नम्राखिलभाग्यदानचतुरं भूदेवभाग्योदयं
विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ ५ ॥

हंसाद्यैर्यतिभिः स्वधर्मनिरतैः संसेव्यमानं मुदा
निःसारत्वधियं तनोति तरसा सर्वेषु भोग्येषु यत् ।
आम्नायान्तरहस्यबोधनचणं तत्सर्वसिद्धिप्रदं
विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ ६ ॥

श्रद्धा भक्तिविरक्तिमुख्यसुगुणान्दत्त्वा चिरात्सेवका-
न्संप्राप्ताखिलयोगजालजनितानन्दान्प्रकुर्वत्तथा ।
ब्रह्माहं न च दृश्यवस्त्विति महावाक्योत्थबोधान्विता-
न्विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ ७ ॥

यच्चित्ते दधतो मुदा परमया लोकान्समस्तान्नृपाः
सेवन्ते भयभक्तिनम्रवपुषः सर्वस्वमप्यादरात् ।
दत्त्वा यान्ति च दासतां चिरतरां तद्भुक्तिमुक्तिप्रदं
विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ ८ ॥

घण्टानादपुरःसरं प्रतिदिनं रात्रौ गणानां गणै-
र्भक्त्या पूरितमानसैः सुमवरैः कर्पूरनीराजनैः ।
धूपैर्दीपचयैर्मनोहरतरैः संपूज्यमानं मुहु-
र्विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥

तुङ्गातीरविहारिमानसलसद्धंसायितं संततं
तुङ्गापत्तनिवारणैकनिपुणं शृङ्गारजन्मालयम् ।
गङ्गावारिनिर्मलं विरचयच्चित्तं नतानां जवा-
द्विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥

इति श्रीविद्यातीर्थपदारविन्दस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीसदाशिवेन्द्रपञ्चरत्नस्तोत्रम् ॥



यत्संदर्शनमात्रा-

द्भक्तिर्जाताप्यविद्धकर्णस्य ।

तत्सदर्शनमधुना

कृत्वा नूनं कृतार्थोऽस्मि ॥ १ ॥

योऽनिशमात्मन्येव

ह्यात्मानं संदधद्वीथ्याम् ।

भस्मच्छन्नानल इव

जडाकृतिश्चरति तं नौमि ॥ २ ॥

यस्य विलोकनमात्रा-

च्चेतासि संजायते शीघ्रम् ।

वैराग्यमचलमखिले-

ष्वपि विषयेषु प्रणौमि तं यमिनम् ॥ ३ ॥

पुरतो भवतु कृपाब्धिः
   पुरवैरिनिविष्टमानसः सोऽयम् ।
परमशिवेन्द्रकराम्बुज-
   संजातो यः सदाशिवेन्द्रो मे ॥ ४ ॥

उन्मत्तवत्संचरतीह शिष्य-
   स्तवेति लोकस्य वचांसि शृण्वन् ।
खिद्यन्नुवाचास्य गुरुः पुराहो
   ह्युन्मत्तता मे न हि तादृशीति ॥ ५ ॥

पञ्चकमतद्भक्त्या
   श्लोकानां विरचितं लोके ।
यः पठति सोऽपि लभते
   करुणां शीघ्रं सदाशिवेन्द्रस्य ॥ ६ ॥

इति श्रीसदाशिवेन्द्रपञ्चरत्नस्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीसदाशिवेन्द्रस्तवः



परतत्त्वलीनमनसे
  प्रणमद्भवबन्धमोचनायाशु ।
प्रकटितपरतत्त्वाय
  प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १ ॥

परमशिवेन्द्रकराम्बुज-
  संभूताय प्रणम्रवरदाय ।
पदधूतपङ्कजाय
  प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २ ॥

विजननदीकुञ्जगृहे
  मञ्जुलपुलिनैकमञ्जुतरतल्पे ।
शयनं कुर्वाणाय
  प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ३ ॥

कामाहिद्विजपतये
शमदममुखदिव्यरत्नवारिधये ।
शमनाय मोहविततेः
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ४ ॥

नमदात्मबोधदाया-
रमते परमात्मतत्त्वसौधाग्रे ।
समबुद्धयेऽश्महेम्नोः
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ५ ॥

गिलिताविद्याहाला-
हलहतपुर्यष्टकाय बोधेन ।
मोहान्धकाररवये
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ६ ॥

शममुखषट्कमुमुक्षा-
विवेकवैराग्यदाननिरताय ।
तरसा नतजनततये
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ७ ॥

सिद्धान्तकल्पवल्ली-
मुखकृतिकर्त्रे कपालिभक्तिकृते ।
करतलमुक्तिफलाय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ८ ॥

तृणपङ्कलिप्तवपुषे
तृणतोऽप्यधरं जगद्विलोकयते ।
वनमध्यविहरणाय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ९ ॥

निगृहीतहृदयहरये
प्रगृहीतात्मस्वरूपरत्नाय ।
प्रणताब्धिपूर्णशशिने
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १० ॥

अज्ञानतिमिररवये
प्रज्ञानाम्भोधिपूर्णचन्द्राय ।
प्रणताघविपिनशुचये
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ११ ॥

मतिमलमोचनदक्ष-
प्रत्यग्ब्रह्मैक्यदाननिरताय ।
स्मृतिमात्रतुष्टमनसे
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १२ ॥

निजगुरुपरमशिवेन्द्र-
श्लाघितविज्ञानकाष्ठाय ।
निजतत्त्वनिश्चलहृदे
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १३ ॥

प्रविलाप्य जगदशेषं
परिशिष्टाखण्डवस्तुनिरताय ।
आस्यप्राप्तान्नभुजे
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १४ ॥

उपधानीकृतबाहुः
परिरब्धविरक्तिरामो यः ।
वसनीकृतखायास्मै
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १५ ॥

सकलागमान्तसार-
प्रकटनदक्षाय नम्रपक्षाय ।
सच्चित्सुखरूपाय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १६ ॥

द्राक्षाशिक्षणचतुर-
व्याहाराय प्रभूतकरुणाय ।
वीक्षापावितजगते
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १७ ॥

योऽनुत्पन्नविकारो
बाहौ म्लेच्छेन च्छिन्नपतितेऽपि ।
अविदितममतायास्मै
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १८ ॥

न्यपतन्सुमानि मूर्धनि
येनोच्चरितेषु नामसूत्रस्य ।
तस्मै सिद्धवराय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १९ ॥

यः पापिनोऽपि लोकां-
स्तरसा प्रकरोति पुण्यनिष्ठाग्र्यान् ।
करुणाम्बुराशयेऽस्मै
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २० ॥

सिद्धेश्वराय बुद्धेः
शुद्धिप्रदपादपद्मनमनाय ।
बद्धौघमोचकाय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २१ ॥

हृद्याय लोकविततेः
पद्यावलिदाय जन्ममूकेभ्यः ।
प्रणतेभ्यः पदयुगले
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २२ ॥

जिह्वोपस्थरतान-
प्याह्वोच्चारेण जातु नैजस्य ।
कुर्वाणाय विरक्ता-
न्प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २३ ॥

कमनीयकवनकर्त्रे
शमनीयभयापहारचतुराय ।
तपनीयसदृशवपुषे
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २४ ॥

तारकविद्यादात्रे
तारापतिगर्ववारकास्याय ।
तारजपप्रवणाय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २५ ॥

मूकोऽपि यत्कृपा चे-
ल्लोकोत्तरकीर्तिराशु जायेत ।
अद्भुतचरितायास्मै
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २६ ॥

दुर्जनदूरायतरां
सज्जनसुलभाय पात्रहस्ताय ।
तरुतलनिकेतनाय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २७ ॥

भवसिन्धुतारयित्रे
भवभक्ताय प्रणम्रवश्याय ।
भवबन्धविरहिताय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २८ ॥

त्रिविधस्यापि त्यागं
वपुषः कर्तुं स्थलत्रये य इव ।
अकरोत्समाधिमस्मै
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ २९ ॥

कामिनमपि जितहृदयं
क्रूरं शान्तं जडं सुधियम् ।
कुरुते यत्करुणास्मै
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ३० ॥

वेदस्मृतिस्थविद्व-
ल्लक्षणलक्ष्येषु संदिहानानाम् ।
निश्चयकृते विहर्त्रे
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ३१ ॥

बालारुणनिभवपुषे
लीलानिर्धूतकामगर्वाय ।
लोलाय चिति परस्यां
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ३२ ॥

शरणीकृताय सुगुणै-
श्चरणीकृतरक्तपङ्कजाताय ।
धरणीसदृक्क्षमाय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ३३ ॥

प्रणताय यतिवरेण्यै-
र्गणनाथेनाप्यहार्यविघ्नहृते ।
गुणदासीकृतजगते
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ३४ ॥

सहमानाय सहस्रा-
ण्यप्यपराधान्प्रणम्रजनरचितान् ।
सहसैव मोक्षदात्रे
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ३५ ॥

धृतदेहाय नताबलि-
तूर्णप्रज्ञाप्रदानवाञ्छातः ।
श्रीदक्षिणवक्त्राय
प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ३६ ॥

तापत्रयार्तहृदय-
स्तापत्रयहारदक्षनमनमहम् ।
गुरुवरबोधितमहिमा
शरणं यास्ये तवाङ्घ्रिकमलयुगम् ॥ ३७ ॥

सदात्मनि विलीनहृत्सकलवेदशास्त्रार्थवि-
त्सरित्तटविहारकृत्सकललोकहृत्तापहृत् ।
सदाशिवपदाम्बुजप्रणतलोकलभ्य प्रभो
सदाशिवयतीट् सदा मयि कृपामपारां कुरु ॥

पुरा यवनकर्तनस्रवदमन्दरक्तोऽपि यः
पुनःपदसरोरुहप्रणतमेनमेनोनिधिम् ।
कृपापरवशः पदं पतनवर्जितं प्रापय-
त्सदाशिवयतीट् स मय्यनवधिं कृपां सिञ्चतु ॥ ३९ ॥

हृषीकहृतचेतसि प्रहृतदेहके रोगकै-
रनेकवृजिनालये शमदमादिगन्धोज्झिते ।
तवाङ्घ्रिपतिते यतौ यतिपते महायोगिराड्
सदाशिव कृपां मयि प्रकुरु हेतुशून्यां द्रुतम् ॥

न चाहमतिचातुरीरचितशब्दसङ्घैः स्तुतिं
विधातुमपि च क्षमो न च जपादिकेऽप्यस्ति मे ।
बलं बलवतां वर प्रकुरु हेतुशून्यां विभो
सदाशिव कृपां मयि प्रवर योगिनां सत्वरम् ॥

शब्दार्थविज्ञानयुता हि लोके
वसन्ति लोका बहवः प्रकामम् ।
निष्ठायुता न श्रुतदृष्टपूर्वा
विना भवन्तं यतिराज नूनम् ॥ ४२ ॥

स्तोकार्चनप्रीतहृदम्बुजाय
पाकाब्जचूडापररूपधर्त्रे ।
शोकापहर्त्रे तरसा नतानां
पाकाय पुण्यस्य नमो यतीशे ॥ ४३ ॥

नाहं हृषीकाणि विजेतुमीशो
नाहं सपर्याभजनादि कर्तुम् ।
निसर्गया त्वं दययैव पाहि
सदाशिवेमं करुणापयोधे ॥ ४४ ॥

कृतयानया नतावलि-
कोटिगतेनातिमन्दबोधेन ।
मुदमेहि नित्यतृप्त-
प्रवर स्तुत्या सदाशिवाश्वाशु ॥ ४५ ॥

इति श्रीसदाशिवेन्द्रस्तवः संपूर्णः ॥



श्रीशृङ्गगिरौ
श्रीभवानीमलहानिकरेश्वरकल्याणोत्सवे
काशीयात्रोत्सवकाले

# ॥ श्रीमलहानिकरेश्वरस्तुतिः ॥



स्वग्रामगमनवाञ्छा
सर्वेषां प्रकृतिसिद्धा हि ।
काशीयात्रा तस्मा-
त्काशीश तवैव खलु युक्ता ॥ १ ॥

शीर्षान्मुक्ताहार-
व्याजात्स्वर्गापगा शंभोः ।
गङ्गाधर विस्रस्ता
नृत्यं किमु कुर्वतस्तवेशान ॥ २ ॥

शरदिन्दुसोदरमुखं
करनिर्जितपङ्कजं कृपाम्भोधिम् ।
त्वां पश्यन्तं मामिह
क्षुत्तृष्णे नैव बाधेते ॥ ३ ॥

सर्वाङ्गसुन्दर विभो
करुणामृतपूरपूरितापङ्ग ।
त्वां चक्षुषी ममेमे
न त्यजतः किं करोमि वद शंभो ॥ ४ ॥

तस्मात्तवेयमनिशं
मूर्तिः प्रस्फुरति चित्तकञ्जाते ।
यद्वत्तथा कुरु त्वं
करुणां गिरिजाब्जशिशुभानो ॥ ५ ॥

इति श्रीमलहानिकरेश्वरस्तुतिः संपूर्णा ॥



श्रीशृङ्गगिरौ

श्रीभवानीमलहानिकरेश्वरकल्याणोत्सवे

# ॥ श्रीभवानीचन्द्रशेखरस्तोत्रम् ॥



वैवाहिकासनासीनौ
वैमानिकवरार्चितौ ।
वैराग्यदायिनौ दत्तां
वैशद्यं मम चेतसः ॥ १ ॥

भक्तेष्टदाननिरतौ
भयवारणदीक्षितौ ।
भवेतां भव्यसंतत्यै
भवानीचन्द्रशेखरौ ॥ २ ॥

भरताग्रजसंसेव्यौ
भवसागरतारकौ ।
भर्मभूषौ नमस्यामि
भवानीचन्द्रशेखरौ ॥ ३ ॥

इति श्रीभवानीचन्द्रशेखरस्तोत्रम् संपूर्णम् ॥



श्रीशृङ्गगिरौ

श्रीभवानीमलहानिकरेश्वरकल्याणोत्सवे

# ॥ श्रीगौरीगिरीशकल्याणस्तवः ॥



चन्द्रार्धप्रविभासिमस्तकतटौ तन्द्राविहीनौ सदा
भक्तौघप्रतिपालने निजतनुच्छायाजितार्कायुतौ ।
शृङ्गाद्रिस्थविवाहमण्टपगतौ कारुण्यवारांनिधी
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥

अन्योन्यार्चनतत्परौ मधुरवाक्संतोषितान्योन्यकौ
चन्द्रार्धाञ्चितशेखरौ प्रणमतामिष्टार्थदौ सत्वरम् ।
शृङ्गाद्रिस्थविवाहमण्टपगतौ शृङ्गारजन्मावनी
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥

कामापत्तिविभूतिकारणदृशौ सोमार्धभूषोज्ज्वलौ
सामाम्नायसुगीयमानचरितौ रामार्चिताङ्घ्रिद्वयौ ।
शृङ्गाद्रिस्थविवाहमण्टपगतौ माणिक्यभूषान्वितौ
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥

सौन्दर्येण परस्परं प्रमुदितावन्योन्यचित्तस्थितौ
राकाचन्द्रसमानवक्त्रकमलौ पाकाब्जकालंकृतौ ।
शृङ्गाद्रिस्थविवाहमण्टपगतौ तुङ्गातटावासिनौ
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥

सिंहोक्षाध्यगतौ महोन्नतपदं संप्रापयन्तौ नता-
नंहोराशिनिवारणैकनिपुणौ ब्रह्मेन्द्रविष्ण्वर्चितौ ।
शृङ्गाद्रिस्थविवाहमण्टपगतौ गाङ्गेयभूषोज्ज्वलौ
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ।

कस्तूरीघनसारचर्चिततनू प्रस्तूयमानौ सुरै-
रस्तूक्त्या प्रणतेष्टपूरणकरौ वस्तूपलब्धिप्रदौ ।
शृङ्गाद्रिस्थविवाहमण्टपगतावङ्गावधूतेन्दुभौ
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥

वार्णानिर्जितहंसकोकिलरवौ पार्णाकृताम्भोरुहौ
वेणीकेशविनिर्जिताहिचपलौ क्षोणीसमानक्षमौ ।
शृङ्गाद्रिस्थविवाहमण्टपगतौ तुङ्गेष्टजालप्रदौ
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा

दम्भाहंकृतिदोषशून्यपुरुषैः संभावनीयौ सदा
जम्भारातिमुखामरेन्द्रविनुतौ कुम्भात्मजार्यर्चितौ ।
शृङ्गाद्रिस्थविवाहमण्टपगतौ वाग्दानदीक्षाधरौ
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥

शापानुग्रहशक्तिदाननिपुणौ तापापनोदक्षमौ
सोपानक्रमतोऽधिकारिभिरनुप्राप्यौ क्षमासागरौ ।
शृङ्गाद्रिस्थविवाहमण्टपगतौ लावण्यपाथोनिधी
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥

शोणाम्भोरुहतुल्यपादयुगलौ बाणार्चनातोषितौ
वीणाधृन्मुनिगीयमानविभवौ बालारुणाभाम्बरौ ।
शृङ्गाद्रिस्थविवाहमण्टपगतौ तुल्याधिकैर्वर्जितौ
कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥

इति श्रीगौरीगिरीशकल्याणस्तवः संपूर्णः ॥



श्रीशृङ्गगिरौ

श्रीभवानीमलहानिकरेश्वरकल्याणोत्सवे

# ॥ श्रीप्रपञ्चमातापित्रष्टकम् ॥



प्रकाशितजगज्जालौ
प्रतुष्यन्मुनिबालकौ ।
प्रपञ्चमातापितरौ
प्राञ्चौ जायापती स्तुमः ॥ १ ॥

प्रणाममात्रसंतुष्टौ
प्रयतैरुपसेवितौ ।
प्रपञ्चमातापितरौ
प्राञ्चौ जायापती स्तुमः ॥ २ ॥

प्रणुन्नपापकान्तारौ
प्रसूनस्रग्विभूषितौ ।
प्रपञ्चमातापितरौ
प्राञ्चौ जायापती स्तुमः ॥ ३ ॥

प्रपन्नपालनव्यग्रौ
प्रतापजितभास्करौ ।
प्रपञ्चमातापितरौ
प्राञ्चौ जायापती स्तुमः ॥ ४ ॥

प्रसादलेशतः स्याद्धि
प्रमतिर्जडराज्ययोः ।
प्रपञ्चमातापितरौ
प्राञ्चौ जायापती स्तुमः ॥ ५ ॥

प्रह्लादमाप्नुयुर्नित्यं
प्रणता यत्पदाब्जयोः ।
प्रपञ्चमातापितरौ
प्राञ्चौ जायापती स्तुमः ॥ ६ ॥

प्रमदाभिः सुरेशानां
प्रकाममुपसेवितौ ।
प्रपञ्चमातापितरौ
प्राञ्चौ जायापती स्तुमः ॥ ७ ॥

प्रशान्तचित्तचापल्यैः
प्रत्यहं परिचिन्तितौ ।
प्रपञ्चमातापितरौ
प्राञ्चौ जायापती स्तुमः ॥ ८ ॥

इति श्रीप्रपञ्चमातापित्रष्टकं संपूर्णम् ॥



श्रीगरलपुरप्रवेशकाले

# ॥ श्रीपार्वतीश्रीकण्ठस्तुतिः ॥



आसन्बहवो घस्रा
मातस्त्वच्चरणदर्शनं हित्वा ।
पार्वति कृतार्थतां खलु
गमितस्त्वत्पाददर्शनादद्य ॥ १ ॥

सच्चित्सुखस्वरूपं
ब्रह्मैतत्पश्यतेन्दुशीर्षाख्यम् ।
इति वदति शैलतनया
साक्षान्नूनं प्रसारिताङ्गुल्या ॥ २ ॥

भक्तानां पापवृक्षौघ-
च्छेदनायेन्दुशेखर ।
बिभर्षि पट्टसं रत्न-
त्सरुं किं लोकशंकर ॥ ३ ॥

स्पृष्टस्य चैकेन पदासुरस्य
महत्पदं मुक्तिरभूत्किलास्य ।
स्पर्शोऽन्यपादस्य फलं हि दातुं
नास्तीत्यतो व्योम्नि दधासि चान्यम् ॥ ४

इति श्रीपार्वतीश्रीकण्ठस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

श्रीगरलपुरतः प्रस्थानसमये

# ॥ श्रीपार्वतीश्रीकण्ठस्तोत्रम्



बहुभ्यो घस्त्रेभ्यस्तव पदसरोजातयुगलं
　निरीक्ष्याहं मोदं बहुलमगमं शैलतनये ।
भविष्यान्मातस्त्वत्पदयुगसरोजातविरहा-
　द्भवेद्यः खेदस्तं शमय हृदयाब्जे विलसनात् ॥

प्रभोऽष्टमूर्ते मम चित्तमध्ये
　संस्थाप्य चैकां तव मूर्तिमारात् ।
अपि स्थितस्य प्रमुदं विधेहि
　का ते क्षतिस्तेन कृपापयोधे ॥ २ ॥

मन्मूर्तिमेकां तव पादमूले
　दधासि यस्माच्छशिबालमौले ।
तस्माच्च मन्मानसपङ्कजाते
　त्वया विधेया तव मूर्तिरेका ॥ ३ ॥

आकाशस्य विभुत्वा-
 त्तत्रस्थत्वाच्च पादपद्मस्य ।
तव नटनाथ पदं म-
 च्चित्ते स्फुरताद्धि यत्र कुत्रापि ॥ ४

**इति श्रीपार्वतीश्रीकण्ठस्तोत्रं संपूर्णम्**



॥ श्रीः ॥

श्रीगोकर्णक्षेत्रे

# ॥ श्रीसर्वमङ्गलामहाबलेश्वरस्तवः ॥



सर्वाणि मङ्गलान्यपि
यत्त्वं प्रददासि नम्रजनतायै ।
तस्मादाख्या समभू-
न्मातस्तव सर्वमङ्गलेत्येव ॥ १ ॥

मातुः सुतेषु करुणा
सहजा न हि कारणान्तराद्भवति ।
रहितेऽपि भक्तिगन्धे-
नातनु करुणां मयीह करुणाब्धे ॥ २ ॥

पराङ्गनां नौमि सुराङ्गनेड्यां
महेशवामाङ्कनिवासशीलाम् ।
परां हि सिद्धिं त्वरितं मनुष्याः
प्रयान्ति यस्याः प्रणतेः कदाचित् ॥ ३ ॥

विलोक्य चन्द्रं हि चकोरमुख्याः
प्रयान्ति तृप्तिं तु कदाचिदम्ब ।
तवास्यचन्द्रं तु विलोक्य नम्राः
प्रयान्ति तृप्तिं न कदापि लोके ॥ ४

महाबलेशमाहात्म्यं
वक्तुं शक्नोति कः पुमान् ।
यद्भयादर्यमाप्यस्य
पश्चाद्भाग उदेष्यति ॥ ५ ॥

चित्रं तव चारित्रं
मच्चित्ते भाति गौरीश ।
देवोऽपि महान्भूत्वा
गोकर्णे वससि यस्मात्त्वम् ॥ ६ ॥

हारो भवतु हारोऽय-
मिति बुद्ध्या समर्पितः ।
त्वया हर गृहीतेऽस्मि-
न्हारत्वं नान्यथा खलु ॥ ७ ॥

हारेऽस्मिन्हारपदं
  रूढं जागर्ति यौगिकं नैव ।
परिगृह्य यौगिकं त-
  त्संपादय पार्वतीनाथ ॥ ८ ॥

महाविभवदायक प्रणमतां जनानां द्रुतं
  महाहरिमुखामरप्रणतपादपङ्केरुह ।
महाघतिमिरच्छटादिनमणे कृपाम्भोनिधे
  महाबल महाप्रभो मयि कृपामपारां कुरु ॥

इति श्रीसर्वमङ्गलामहाबलेश्वरस्तवः संपूर्णः ॥



॥ श्रीः ॥

श्रीजम्बुकेश्वरक्षेत्रे

# श्रीमदखिलाण्डदेवीजम्बुकेश्वरस्तुतिः



अपराधसहस्राणि
　　ह्यपि कुर्वाणे मयि प्रसीदाम्ब ।
अखिलाण्डदेवि करुणा-
　　वाराशे जम्बुकेशपुण्यतते ॥ १ ॥

ऊर्ध्वस्थिताभ्यां करपङ्कजाभ्यां
　　गाङ्गेयपद्मे दधतीमधस्तात् ।
वराभये संदधतीं कराभ्यां
　　नमामि देवीमखिलाण्डपूर्वाम् ॥ २ ॥

जम्बूनाथमनोऽम्बुजातदिनराड्बालप्रभासंततिं
　　शम्बूकादिवृषावलिं कृतवतीं पूर्वं कृतार्थामपि ।
कम्बूर्वीधरधारिणीं वपुषि च ग्रीवाकुचव्याजतो
　　ह्यम्बूर्वीधररूपिणीं हृदि भजे देवीं क्षमासागरीम् ॥

जम्बूमूलनिवासं
कम्बूज्ज्वलगर्वहरणचणकण्ठम् ।
अम्बूर्वीधररूपं
शम्बूकादेर्वरप्रदं वन्दे ॥ ४ ॥

इति श्रीमदखिलाण्डदेवीजम्बुकेश्वरस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

श्रीपापविनाशक्षेत्रे

# श्रीलोकनायकीपापविनाशेश्वरस्तोत्रम्

— — ❀ — —

लोकनायकि कृपामृतराशे
पाकचन्द्रविलसत्कचभारे ।
शोकवारणनिविष्टमनस्के
नाकनाथविनुते परिपाहि ॥ १ ॥

पापानां नाशः स्या-
द्विशेषतो यत्त्वदङ्घ्रिवीक्षातः ।
पापविनाशेश्वर इति
तस्मान्नामाभवत्तवेशान ॥ २ ॥

इति श्रीलोकनायकीपापविनाशेश्वरस्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीललिताम्बापरमेश्वरस्तवः ॥



कलयतु कल्याणततिं
कमलासखपद्मयोनिमुखवन्द्यः ।
करिमुखषण्मुखयुक्तः
कामेशस्त्रिपुरसुन्दरीनाथः ॥ १ ॥

एकैवाहं जगती-
त्यायोधनमध्य अब्रवीद्यादौ ।
शुम्भं प्रति सा पाया-
दाद्या शक्तिः कृपापयोराशिः ॥ २ ॥

ईषदिति मन्यते य-
त्पदभक्तः शंभुविष्णुमुखपदवीः ।
सा मे निश्चलविरतिं
दद्याद्विषयेषु विष इवात्यन्तम् ॥ ३ ॥

लभते परात्मविद्यां
सुदृढामेवाशु यत्पदासक्तः ।
तां नौमि बोधरूपा-
माद्यां विद्यां शिवाजमुखसेव्याम् ॥ ४

ह्रीमान्भवेत्सुरेश-
स्तद्गुरुरपि यत्पदाब्जभक्तस्य ।
लक्ष्मीं गिरं च दृष्ट्वा
सा मामव्यात्तयोः प्रदानेन ॥ ५ ॥

हसति विधुं हासेन
प्रवालमपि पञ्चशाखमार्दवतः ।
अधरेण बिम्बमव्या-
त्सा मा सोमार्धमूर्धपुण्यततिः ॥ ६ ॥

सकलाम्नायशिरोभि-
स्तात्पर्येणैव गीयते रूपम् ।
यस्याः सावतु सततं
गङ्गाधरपूर्वपुण्यपरिपाठी ॥ ७ ॥

कलिमलनिवारणव्रत-
　　कृतदीक्षः कालसर्वगर्वहरः ।
करणवशीकरणपटु-
　　प्राभवदः पातु पार्वतीनाथः ॥ ८ ॥

हरतु तमो हार्दं मे
　　हालाहलराजमानगलदेशः ।
हंसमनुप्रतिपाद्यः
　　परहंसाराध्यपादपाथोजः ॥ ९ ॥

ललनाः सुरेश्वराणां
　　यत्पदपाथोजमर्चयन्ति मुदा ।
सा मे मनसि विहारं
　　रचयतु राकेन्दुगर्वहरवदना ॥ १० ॥

ह्रीमन्तः कलयति यो
　　मूलं मूलं समस्तलक्ष्मीनाम् ।
तं चक्रवर्तिनोऽपि
　　प्रणमन्ति च यान्ति तस्य भृत्यत्वम् ॥ ११

सदनं प्रभवति वाचां
यन्मूर्तिध्यानतो हि मूकोऽपि ।
सरसां सालंकारां
सा मे वाचं ददातु शिवमहिषी ॥ १२ ॥

करकलितपाशसृणिशर-
शरासनः कामधुक्प्रणम्राणाम् ।
कामेश्वरीहृदम्बुज-
भानुः पायाद्युवा कोऽपि ॥ १३ ॥

लब्ध्वा स्वयं पुमर्था-
श्चतुरः किंचात्मभक्तवर्येभ्यः ।
दद्याद्यत्पदभक्तः
सा मयि करुणां करोतु कामेशी ॥ १४ ॥

ह्रींकारजपपराणां
जीवन्मुक्तिं च भुक्तिं च ।
या प्रददात्यचिरात्तां
नौमि श्रीचक्रराजकृतवसतिम् ॥ १५ ॥

श्रीमातृपदपयोजा-
सक्तस्वान्तेन केनचिद्यतिना ।
रचिता स्तुतिरियमवनौ
पठतां भक्त्या ददाति शुभपङ्क्तिम् ॥ १६ ॥

इति श्रीललिताम्बापरमेश्वरस्तवः संपूर्णः ॥



॥ श्रीः ॥

# श्रीललिताम्बापरमेश्वरस्तुतिः



कल्याणशैलधन्वा
करधृतकुम्भाक्षमालिकामुद्रः ।
कलयतु मम संतोषं
करिचर्मधरः कृपापयोराशिः ॥ १ ॥

एकात्मकत्वधिषणा-
मेधयतीमीशजीवयोर्नमताम् ।
एकान्तवासलभ्या-
मेकां पुण्यावलिं नुमः शंभोः ॥ २ ॥

ईशोऽर्धवपुर्यस्या
ईप्सितपङ्क्तिर्यदङ्घ्रिनतसुलभा ।
ईकाररूपिणीं ता-
मीश्वरपत्नीं हृदा सदा कलये ॥ ३ ॥

लभ्यन्तेऽखिलविभवा
लब्धावसरैर्यदीयमन्त्रजपे ।
लक्ष्मीगीर्विनुता सा
लक्ष्या भूयान्मदीयचित्तस्य ॥ ४ ॥

ह्रींकारपद्मभृङ्गौ
ह्रींकारावृत्तिशीलनरसुलभौ ।
ह्रींकारगिरिमृगेन्द्रौ
ह्रींकारेणैव भावयामि शिवौ ॥ ५ ॥

हरतादाशु जडत्वं
हरिदाधिपाराध्यपादपाथोजः ।
हरिणाङ्ककलितचूडो
हृतवर्ष्मार्धः कुलाद्रिकन्यकया ॥ ६ ॥

सत्यं ज्ञानमितीमे
सकलाम्नाया वदन्ति यद्रूपम् ।
सद्गुरुमुखैकवेद्यां
सन्मतिदां नौमि तां परामनिशम् ॥ ७ ॥

कर्मभिरात्मानुगणैः
कलितामलभावचित्तकञ्जातैः ।
कतिपयपुरुषवरेण्यैः
कथमपि बुद्धं नमामि शशिमौलिम् ॥ ८ ॥

हतरिपुवर्गैः शान्तै-
र्हरिहयपद्मोद्भवादिपदविमुखैः ।
हंसकरैः परमार्थ-
र्हस्ताम्बुजपूजितं नमामि हरम् ॥ ९ ॥

ललितां कवित्वसरणिं
लभते मूकोऽपि यत्कृपालेशात् ।
लङ्केशाहितविनुतां
लम्बोदरमातरं नमस्यामि ॥ १० ॥

ह्रींकारगेहगृहिणौ
ह्रींकारपयःपयोधिकल्पतरू ।
ह्रींकारवनमयूरौ
ह्रींकारशरीरिणौ शिवौ वन्दे ॥ ११ ॥

सम्यङ्निरुध्य चेतः
सकलानि निगृह्य करणानि ।
सततं यतिभिर्हृदये
समाधिभाव्यां नमामि ललिताम्बाम् ॥ १२ ॥

कणभुक्कपिलाराध्यः
कथिताधिकसौख्यदानकृतदीक्षः ।
करविधृतहरिणबालः
कलाभिवृद्ध्यै ममास्तु परमेशः ॥ १३ ॥

ललनाभिस्त्रिदशानां
ललितैर्गीतैः स्तुतात्मचारित्राम् ।
लसदलकफालदेशां
लभ्यां योगैर्नमामि जगदम्बाम् ॥ १४ ॥

ह्रींकारसौधराजौ
ह्रींकाराम्भोधिपूर्णसितकिरणौ ।
ह्रींकारवाच्यरूपौ
ह्रींनिष्कुटकोकिलौ शिवौ कलये ॥ १५ ॥

आदौ यन्मनुवर्णै-
घटिता रचिता स्तुतिर्येयम् ।
सा ललिता तामूरी-
कुर्यादव्याजकरुणाङ्गी ॥ १६ ॥

इति श्रीललिताम्बापरमेश्वरस्तुतिः संपूर्णा



॥ श्रीः ॥

# ॥ देवीधामाष्टकम् ॥



कस्मैचिदङ्घ्रिप्रणताखिलेष्ट-
विश्राणनव्रीडितकौस्तुभाय ।
कामारिवामाङ्कजुषे किरीट-
कलच्छशाङ्काय नमोऽस्तु धाम्ने ॥ १ ॥

कस्मैचिदुद्यद्रविकोटिभासे
कल्पद्रुमाणामपि गर्वहर्त्रे ।
पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाण-
हस्ताय शस्ताय नमोऽस्तु धाम्ने ॥ २ ॥

कस्मैचिदाद्याय नमोऽस्तु धाम्ने
बन्धूकपुष्पाभकलेबराय ।
कुलाद्रिवंशाम्बुधिकौस्तुभाय
मत्तेभकुम्भस्तनबन्धुराय ॥ ३ ॥

कस्मैचिदाद्याय नमोऽस्तु धाम्ने
भण्डासुराम्भोनिधिबाडबाय ।
भक्तौघसंरक्षणदक्षिणाय
भाधीशनीकाशमुखाम्बुजाय ॥ ४ ॥

कस्मैचिदस्तु प्रणतिः कराम्बु-
जातम्रदिम्ना हसते प्रवालम् ।
कारुण्यजन्मावनये कपर्दि-
मोदाब्धिराकारजनीकराय ॥ ५ ॥

कल्याणशैलाधिपमध्यशृङ्ग-
निकेतनाय प्रणतार्तिहन्त्रे ।
क्रव्यादवैरिप्रमुखेडिताय
कुर्मः प्रणामं कुतुकाय शंभोः ॥ ६ ॥

कचप्रभानिर्जितनीरदाय
कस्तूरिकाकुङ्कुमलेपनाय ।
बिम्बाधराय श्रुतिबोधिताय
बन्धापनोदाय नमोऽस्तु धाम्ने ॥ ७ ॥

कटाक्षकाङ्क्षिप्रवरामराय
कालारिचित्ताम्बुजभास्कराय ।
पटीयसे पापसमूहभेदे
नमोऽस्तु कस्मैचिदमोघधाम्ने ॥ ८

इति श्रीदेवीधामाष्टकं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ पृथ्वीधरराजपुत्र्यष्टकम् ॥



ज्ञात्वापि दोषान्विषयेषु शब्द-
रसादिमेष्वप्रतिबद्धतर्षम् ।
आकारमात्रात्परहंसरूपं
मां पाहि पृथ्वीधरराजपुत्रि ॥ १ ॥

विवेकवैराग्यशमादिषट्क-
मुमुक्षुतागन्धलवानभिज्ञम् ।
नक्तंदिवं स्वोदरपूरणेच्छुं
मां पाहि पृथ्वीधरराजपुत्रि ॥ २ ॥

काषायवस्त्रेण करात्तदण्ड-
कमण्डलुभ्यां जपमालया च ।
विभ्रामयन्तं गृहिणां कदम्बं
मां पाहि पृथ्वीधरराजपुत्रि ॥ ३ ॥

वेदान्तवाक्यानि मुधोच्चरन्तं
तदर्थजातं बहु वर्णयन्तम् ।
कदापि न ध्यातपरात्मतत्त्वं
मां पाहि पृथ्वीधरराजपुत्रि ॥ ४ ॥

सुवर्णतन्तूज्ज्वलचेलकामं
यानेषु मानेषु विवृद्धरागम् ।
अङ्गीकृतानेकसुमित्रशत्रुं
मां पाहि पृथ्वीधरराजपुत्रि ॥ ५ ॥

भोगा अनेका मनसाप्यलभ्या
भूयासुरित्यन्वहमीहमानम् ।
गुरूत्तमाराधनदूरचित्तं
मां पाहि पृथ्वीधरराजपुत्रि ॥ ६ ॥

कुतो यतेरस्य शरीरमान-
धनाभिमानः सततं दुरन्तः ।
अशेषलोकैरिति निन्द्यमानं
मां पाहि पृथ्वीधरराजपुत्रि ॥ ७ ॥

निवारिताशेषमहाघबृन्दै-
रव्याजकारुण्यसुधातरङ्गैः ।
अपाङ्गपातैरवलोकयन्ती
मां पाहि पृथ्वीधरराजपुत्रि ॥ ८ ॥

इदं हि पृथ्वीधरराजपुत्री-
पादारविन्दार्पितमानसेन ।
कर्मन्दिना निर्मितमष्टकं यः
पठेत्स भूयादखिलेष्टगेहम् ॥ ९ ॥

इति श्रीपृथ्वीधरराजपुत्र्यष्टकं संपुर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीललितास्तोत्रम् ॥



कथनीयं किं वाञ्छित-
मम्ब पुरस्ते न सर्वज्ञा ।
किं त्वं शैलेशसुते
पूरय वाञ्छां ममाशु करुणाब्धे ॥ १ ॥

एतावता तव स्या-
त्का हानिः कामवैरिपुण्यतते ।
पश्य दृगग्रेण जनं
क्लिष्टमिमं बहुविधैर्दुःखैः ॥ २ ॥

ईडितपदे सुराद्यै-
रीशानप्रभृतिभिर्निजेष्टाप्त्यै ।
ईप्सितवितरणनिर्जित-
कल्पतरो रोहिणीशशिशुचूडे ॥ ३ ॥

लक्ष्यं भूयादक्ष्णो-
र्ललनारत्नं ललाटनयनस्य ।
क्व नु मम हेतुविहीना-
पारकृपाजन्मगेहमगजन्म ॥ ४ ॥

ह्रीमान्को वा न भवति
गिरिजे त्वत्पादपङ्कजं स्तोतुम् ।
पद्मजषण्मुखफणिरा-
ण्मुख्या अपि यत्र मूकतां यान्ति ॥ ५ ॥

॥ श्रीः ॥

# ॥ श्रीललितास्तवः ॥



कलयतु कवितां सरसां
कविहृद्यां कालकालकान्ता मे ।
कमलोद्भवकमलासख-
कलितप्रणतिः कृपापयोराशिः ॥ १ ॥

एनोनीरधिनौका-
मेकान्तवासमौनरतलभ्याम् ।
एणाङ्कतुल्यवदना-
मेकाक्षररूपिणीं शिवां नौमि ॥ २ ॥

ईक्षणनिर्जितहरिणी-
मीप्सितसर्वार्थदानधौरेयाम् ।
ईडितविभवां वेदै-
रीशाङ्कनिवासिनीं स्तुवे देवीम् ॥ ३ ॥

ललितैः पदविन्यासै-
र्लज्जां तनुते यदीयपदभक्तः ।
लघु देवेन्द्रगुरोरपि
ललितां तां नौमि संततं भक्त्या ॥ ४ ॥

॥ श्रीः ॥

श्रीशृङ्गगिरौ प्लेगामयकाले

# ॥ श्रीदुर्गास्तवः ॥



एतावन्तं समयं
 सर्वापद्भ्योऽपि रक्षणं कृत्वा ।
ग्रामस्य परमिदानीं
 ताटस्थ्यं केन वहसि दुर्गाम्ब ॥ १ ॥

अपराधा बहुशः खलु
 पुत्राणां प्रतिपदं भवन्त्येव ।
को वा सहते लोके
 सर्वांस्तान्मातरं विहायैकाम् ॥ २ ॥

मा भज मा भज दुर्गे
 ताटस्थ्यं पुत्रकेषु दीनेषु ।
के वा गृह्णन्ति सुता-
 न्मात्रा त्यक्तांन्वदाम्बिके लोके ॥ ३

इतः परं वा जगदम्ब जातु
ग्रामस्य रोगप्रमुखापदोऽस्य ।
न स्युस्तथा कुर्वचलां कृपामि-
त्यभ्यर्थनां मे सफलीकुरुष्व ॥ ४ ॥

पापहीनजनतावनदक्षाः
सन्ति निर्जरवरा न कियन्तः ।
पापपूर्णजनरक्षणदक्षां-
स्त्वां विना भुवि परान्न विलोके ॥ ५ ॥



॥ श्रीः ॥

श्रीकन्याकुमारीक्षेत्रे

# ॥ श्रीकन्यकुमारीपञ्चरत्नस्तुतिः ॥



कान्तिधूतकनकाखिलगर्वां
काञ्चनाश्मसमबुद्धिविधात्रीम् ।
काङ्क्षितार्थलघुदानसमर्थां
कांचनात्र कलये हृदि कन्याम् ॥ १ ॥

मान्यमङ्गजरिपोरपि यत्त-
च्छून्यदेहमतिमुख्यविकल्पैः ।
मन्यते जडजनो हृदि कुर्वे
कन्यकामहमघौघनिवृत्त्यै ॥ २ ॥

वन्यमूलफलरक्षितदेहै-
र्जन्यसौख्यविमुखैरुपशान्तैः ।
कन्यकां धरपतेरुपसेव्या-
मन्यशून्यहृदयः प्रणतोऽस्मि ॥ ३

कुमारीं रमामुख्यदेवाङ्गनार्च्यां
समाधिप्रवीणैः समाराध्यपादाम् ।
क्षमागर्वमात्मक्षमातोऽतिदूरं
नयन्तीं शमादीनभीप्सन्नमस्ये ॥ ४ ॥

क्षपानाथचूडां कृपावारिराशिं
विपापेड्यपादामपारं भवाब्धिम् ।
स्वपादाब्जनम्रान्द्रुतं तारयन्तीं
कुमारीं भजे कन्यपूर्वामजस्रम् ॥ ५ ॥

**इति श्रीकन्यकुमारीपञ्चरत्नस्तुतिः संपूर्णा ॥**



|| श्रीः ||

# ॥ श्रीसुगन्धिकुन्तलाम्बास्तवराजः ॥



सुखप्रदे नमत्ततेः सुबुद्धिलोकभाविते
सुधाकरार्भकोल्लसत्किरीटवर्यभासुरे ।
सुमेषुवैरिचित्तकञ्जवासरेट्प्रभावले
सुगन्धिकुन्तलाम्बिके प्रसीद सत्वरं मम ॥ १ ॥

सुखांशहीनदुष्टगोचरप्रसक्तचेतसो
निदाघभानुबद्धसौख्यतृष्णया प्रतप्यतः ।
हृदापि तावकं पदं कदापि न स्मरिष्यतः
सुगन्धिकुन्तलाम्बिके प्रसीद सत्वरं मम ॥ २ ॥

सुखालिदानदीक्षिते प्रणम्रलोकसंततेः
सुमोल्लसत्कचोज्ज्वले सुपर्वमानिनीस्तुते ।
सुरालिमौलिरत्नभाविराजिताङ्घ्रिपङ्कजे
सुगन्धिकुन्तलाम्बिके प्रसीद सत्वरं मम ॥ ३ ॥

सुताविशेषसंस्तवक्लृपे प्रणम्रसंततौ
सुरासुरादिवन्दिते सुरोत्तमैः समर्चिते ।
सुवाग्झरीप्रदानदक्षपादपद्मसंनते
सुगन्धिकुन्तलाम्बिके प्रसीद सत्वरं मम ॥ ४ ॥

इति श्रीसुगन्धिकुन्तलाम्बास्तवराजः संपूर्णः ॥



॥ श्रीः ॥

# ॥ श्रीदेवीनवरत्नमालिकास्तोत्रम् ॥



बालायाश्चरणद्वन्द्व-
माश्रयेऽभीष्टसिद्धये ।
लोलायाः कुमुदानन्द-
बालचुम्बितमस्तके ॥ १ ॥

बालाम्बिकां नौमि पिनाकपाणे-
र्वामार्धरूपां परमार्थदात्रीम् ।
संसारपाथोनिधिपारमाशु
नतान्नयन्तीं नवभानुरूपाम् ॥ २

मूकोऽपि काव्यं प्रकरोति यस्याः
कारुण्यतश्चित्रपदार्थरम्यम् ।
सा मे प्रसीदत्वगराजकन्या
मान्या सुराणां कवितावदान्या ॥ ३ ॥

कम्बुकण्ठि करुणामृतराशे
 शङ्खधृन्मुखसुराग्र्यनिषेव्ये ।
अम्बुजप्रतिमकेशसमूहे
 शम्बरार्यहितकामिनि पाहि ॥ ४ ॥

यशःपूगदात्रीं तमःपारदात्रीं
 रहःपूजनेष्टां तपःपूर्णचित्ताम् ।
गिरीन्द्रस्य पुत्रीं जवात्कालहन्त्रीं
 नमस्यामि कारुण्यपूर्णेक्षणां त्वाम् ॥ ५ ॥

विध्यण्डमण्डलविनिर्मितिदक्षलीलां
 विध्वर्भकप्रविलसन्मकुटैकलोलाम् ।
शुभ्राभ्रदुग्धपरिहाससमर्थचेलां
 शुद्धान्तरङ्गविदितां प्रणतोऽस्मि बालाम् ॥

मातर्बाधिर्यमूकीभवनमुखमहारोगसंपीडिताङ्गा
 भूताविष्टाश्च तत्तत्प्रशमनमचिरात्काङ्क्षमाणाः सुदूरात् ।
आगत्याश्वेव तत्तत्प्रशमनपटुतां मन्यमाना जनेऽस्मि-
 न्याचन्ते किं प्रकुर्यां वद तुहिनगिरीशानपुत्रीन्दुमौले ॥

भक्तानामतिशीघ्रमिष्टफलदां सक्तां गिरीशे मुदा
मुक्ताहारविभूषितस्तनयुगां त्यक्ताभिलाषैर्नुताम् ।
शक्तां कौतुकतः प्रपञ्चजनने रक्ताम्बरां भावये
सिक्तां कुम्भिकराग्रकुम्भसलिलैर्युक्तां गजास्यादिभिः ॥

कल्याणानि करोतु कापि तरुणी कामारिसंमोहिनी
कल्याणाचलमध्यशृङ्गवसतिः कल्या प्रणम्रावने ।
प्रालेयाचलवर्यमात्मजननस्याधारमातन्वती
नैजान्तःकरणार्द्रतां प्रणमतां प्रख्यापयत्याशु या ॥

इति श्रीदेवीनवरत्नमालिकास्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीशिवास्तुतिकदम्बम् ॥



कमलानि साम्यमाप्तुं
तप्यन्त्यद्यापि कण्ठदघ्नजले ।
यत्पादयोरहर्निश-
मनिशं नौमि तां राजराजेशीम् ॥ १ ॥

कमलासखकमलोद्भव-
कामारिप्रमुखनिर्जरैःसेव्याम् ।
विमलामतिलघुधिषणां
ददतीं नौमि नम्राय कामाक्षीम् ॥ २ ॥

वलमानकदम्बमालिकां
ललनामिन्दुशिखामणेः पराम् ।
तुलनारहितास्यपङ्कजां
कलये चेतसि शैलराट्सुताम् ॥ ३ ॥

तामरसतुल्यचरणां
श्यामपयोवाहकान्तिकचलसिताम् ।
सामनुतदिव्यचरितां
सोमसमास्यां नमामि गिरिबालाम् ॥ ४ ॥

नयनजितपद्मगर्वे
नय नतमेनं महापदवीम् ।
मतिमति महेशमानिनि
मतिमन्मनुजार्च्यमानपदपद्मे ॥ ५ ॥

नारदमुखमुनिचिन्त्यां
नीरदगर्वापहारिकेशततिम् ।
पारदसमानवर्णां
शारदचन्द्राननां भजे गौरीम् ॥ ६ ॥

पङ्कजसमानवक्त्रा-
मङ्कगतां बालचन्द्रचूडस्य ।
संकर्षणादिविनुतां
शंकरचरणार्चनां नमामि शिवाम् ॥ ७ ॥

पाकारिमुखसुरेड्यां
केकानीकाशवचनसद्भङ्गीम् ।
कोकारिशिशुवतंसां
शोकापहरां नमामि शिवदयिताम् ॥ ८ ॥

बाहुजितपङ्कजस्रज-
माहुर्यां कालिदासमुखकवयः ।
तां हुतवहाभवस्त्रां
मुहुर्मुहुर्नमामि जगदम्बाम् ॥ ९ ॥

यवकोटिसूक्ष्मरूपे
स्वजितपरपुष्टगर्वसर्वस्वे ।
नवनवकवित्वदायिनि
शिवमानसहंसि मां पाहि ॥ १० ॥

यावकसमानवर्णं
तावकमम्बाङ्घ्रिपङ्कजद्वन्द्वम् ।
स्तावकसुखततिदं खलु
पावकशशिसूर्यमण्डलान्तःस्थे ॥ ११ ॥

वाचां ततिं ददानां
मोचां नीचां विधातुमतिचतुराम् ।
प्राचां वचसां गेया-
माचान्ताघां नमामि गिरितनयाम् ॥ १२ ॥

पालितदिविजे पृथ्वी-
पालितनिजदासनिकुरुम्बे ।
पर्वतपतितनयेऽव सु-
पर्वतरोर्दर्पहरणचतुरे माम् ॥ १३ ॥

सरसिजमुखि नम्राग्रे-
सरसिद्धिविधायिनि क्षिप्रम् ।
भवजलधिपारदा त्वं
भव जलजास्ये भवानि मम तरसा ॥ १४ ॥

**इति श्रीशिवास्तुतिकदम्बं संपूर्णम् ।**



|| श्रीः ||

# ॥ श्रीमहात्रिपुरसुन्दरीपञ्चकम् ॥



मनोज्ञमणिकुण्डलां महितचक्रराजालयां
मनोऽम्बुजविहारिणीं परशिवस्य वामाङ्कगाम् ।
महाहरिमुखामरप्रणतपादपङ्केरुहां
महात्रिपुरसुन्दरीं मनसि भावये संततम् ॥ १ ॥

मतङ्गमुनिपूजितां मथितपापसङ्घां जवा-
न्मदारुणितलोचनां मदमुखारिनिर्वापिणीम् ।
मनःसु यमिनां सदा स्थितिविहारिणीं मोदतो
महात्रिपुरसुन्दरीं मनसि भावये संततम् ॥ २ ॥

विचित्रकविताप्रदां नतततेर्विलम्बं विना
विधीन्द्रहरिवन्दितां विधिनिषेधसक्तार्चिताम् ।
विनायकविभावसूद्भवविभासिपार्श्वद्वयां
महात्रिपुरसुन्दरीं मनसि भावये संततम् ॥ ३ ॥

विनिन्दितविभावरीविटसहस्रगर्वाननां
विनिर्मितजगत्त्रयीं विधुसमानमन्दस्मिताम् ।
विबोधनपटीयसीं विनतसंततेः सत्वरं
महात्रिपुरसुन्दरीं मनसि भावये संततम् ॥ ४ ॥

विमानचरमानिनीविहितपादसेवां मुदा
विशालनयनाम्बुजां विधृतचापपाशाङ्कुशाम् ।
विशुद्धिसरसीरुहे कृतनिजासनां सर्वदा
महात्रिपुरसुन्दरीं मनसि भावये संततम् ॥ ५ ॥

विरागिजनसेवितां विमलबुद्धिसंदायिनीं
विराधरिपुपूजितां विविधरत्नभूषोज्ज्वलाम् ।
विरिञ्चिहरिसुन्दरीकलितचामरावीजनां
महात्रिपुरसुन्दरीं मनसि भावये संततम् ॥ ६ ॥

इति श्रीमहात्रिपुरसुन्दरीषट्कं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीराजराजेश्वरीषोडशी



ह्रीं‌जपमात्रतुष्टहृदयां श्रीचक्रराजालयां
भाग्यायत्तनिजाङ्घ्रिपङ्कजनतिस्तोत्रादिसंसेवनाम् ।
स्कन्देभास्यविभासिपार्श्वयुगलां लावण्यपाथोनिधिं
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥

नौमि ह्रीमत आदधाति सुगिरा वागीश्वरादीन्सुराँ-
ल्लक्ष्मीन्द्रप्रमुखांश्च सत्वरमहो यत्पादनम्रो जनः ।
कामादींश्च वशीकरोति तरसायासं विना तां मुदा
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥

नौमि श्रीसुतजीवनप्रदकटाक्षांशां शशाङ्कं रविं
कुर्वाणां निजकर्णभूषणपदादानेन तेजस्विनौ ।
चाम्पेयं निजनासिकासदृशतादानात्कृतार्थं तथा
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥

नौमि श्रीविधिभामिनीकरलसत्सच्चामराभ्यां मुदा
सव्ये दक्षिणके च वीजनवतीमैन्द्र्यात्तसत्पादुकाम् ।
वेदैरात्तवपुर्भिरादरभरात्संस्तूयमानां सदा
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥ ४ ॥

नौमि श्रीमतिधैर्यवीर्यजननीं पादाम्बुजे जातुचि-
न्नम्राणामपि शान्तिदान्तिसुगुणान्विश्राणयन्तीं जवात् ।
श्रीकामेशमनोम्बुजस्य दिवसेशानार्भकाणां ततिं
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥ ५ ॥

नौमि श्रीपतिपद्मयोनिगिरिजानाथैः समाराधितां
रम्भास्तम्भसमानसक्थियुगलां कुम्भाभिरामस्तनीम् ।
भामिन्यादिविषोपमेयविषयेष्वत्यन्तवैराग्यदां
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥ ६ ॥

नौमि व्याहृतिनिर्जितामरधुनीगर्वा भवन्त्यञ्जसा
मूका अप्यवशाद्यदङ्घ्रियुगलीसंदर्शनाज्जातुचित् ।
हार्दध्वान्तनिवारणं विदधतीं कान्त्या नखानां हि तां
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥ ७ ॥

नौमि ब्रह्मविबोधिनीं नमुचिजिन्मुख्यामराणां तते-
भण्डाद्याशरखण्डनैकनिपुणां कल्याणशैलालयाम् ।
फुल्लेन्दीवरगर्वहारिनयनां मल्लीसुमालंकृतां
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥ ८ ॥

नौमि प्रीतिमतां यदङ्घ्रियुगलार्चायां न बन्धो भवे-
त्स्याच्चेद्विन्ध्यनगः प्लवेच्चिरमहो नाथे नदीनामिति ।
मूकः प्राह महाकविर्हि करुणापात्रं भवान्याः स्तुतिं
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥ ९ ॥

नौमि प्राप्तिकृते यदीयपदयोर्विप्राः समस्तेषणा-
स्त्यक्त्वा सद्गुरुमभ्युपेत्य निगमान्तार्थं तदास्याम्बुजात् ।
श्रुत्वा तं प्रविचिन्त्य युक्तिभिरतो ध्यायन्ति तां सादरं
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥ १० ॥

नौमि प्राणनिरोधसज्जनसमासङ्गात्मविद्यामुखै-
राचार्याननपङ्कजप्रगलितैश्चेतो विजित्याशु याम् ।
आधारादिसरोरुहेषु सुखतो ध्यायन्ति तां सर्वदा
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥

नौमि न्यायमुखेषु शास्त्रनिवहेष्वत्यन्तपाण्डित्यदां
वेदान्तेष्वपि निश्चलामलधियं संसारबन्धापहाम् ।
दास्यन्तीं दयया प्रणम्रविततेः कामारिवामाङ्कगां
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥

नौमि त्वां शुचिसूर्यचन्द्रनयनां ब्रह्माम्बुजाक्षागजे-
ड्रूपाणि प्रतिगृह्य सर्वजगतां रक्षां मुदा सर्वदा ।
कुर्वन्तीं गिरिसार्वभौमतनयां क्षिप्रं प्रणम्रेष्टदां
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥

नौमि त्वां शरदिन्दुसोदरमुखीं देहप्रभानिर्जित-
प्रोद्यद्भासरनाथसंततिमघाम्भोराशिकुम्भोद्भवम् ।
पञ्चप्रेतमये सदा स्थितिमतीं दिव्ये मृगेन्द्रासने
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥

नौमि त्वामनपेक्षकारणकृपारूपेति कीर्तिं गतां
नौकां संसृतिनीरधेस्तु सुदृढां प्रज्ञानमात्रात्मिकाम् ।
कालाम्भोदसमानकेशनिचयां कालाहितप्रेयसीं
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥

नौमि त्वां गणपः शिवो हरिरुमेत्याद्यैर्वचोभिर्जना-
स्तत्तन्मूर्तिरता वदन्ति परमप्रेम्णा जगत्यां तु याम् ।
तां सर्वाशयसंस्थितां सकलदां कारुण्यवारांनिधिं
भक्तत्राणपरायणां भगवतीं श्रीराजराजेश्वरीम् ॥

इति श्रीराजराजेश्वरीषोडशी संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीचन्द्रमौलीशस्तोत्रम् ॥



ओंकारजपरताना-
मोंकारार्थं मुदा विवृण्वानम् ।
ओजःप्रदं नतेभ्य-
स्तमहं प्रणमामि चन्द्रमौलीशम् ॥ १ ॥

नम्रसुरासुरनिकरं
नलिनाहंकारहारिपदयुगलम् ।
नमदिष्टदानधीरं
सततं प्रणमामि चन्द्रमौलीशम् ॥ २ ॥

मननाद्यत्पदयोः खलु
महतीं सिद्धिं जवात्प्रपद्यन्ते ।
मन्देतरलक्ष्मीप्रद-
मनिशं प्रणमामि चन्द्रमौलीशम् ॥ ३

शितिकण्ठमिन्दुदिनकर-
शुचिलोचनमम्बुजाक्षविधिसेव्यम् ।
नतमतिदानधुरीणं
सततं प्रणमामि चन्द्रमौलीशम् ॥ ४ ॥

वाचो विनिवर्तन्ते
यस्मादप्राप्य सह हृदैवेति ।
गीयन्ते श्रुतितातिभि-
स्तमहं प्रणमामि चन्द्रमौलीशम् ॥ ५ ॥

यच्छन्ति यत्पदाम्बुज-
भक्ताः कुतुकात्स्वभक्तेभ्यः ।
सर्वानपि पुरुषार्था-
स्तमहं प्रणमामि चन्द्रमौलीशम् ॥ ६ ॥

पञ्चाक्षरमनुवर्णै-
रादौ क्लृप्तां स्तुतिं पठन्नेनाम् ।
प्राप्य दृढां शिवभक्तिं
भुक्त्वा भोगाँल्लभेत मुक्तिमपि ॥ ७ ॥

**इति श्रीचन्द्रमौलीशस्तोत्रं संपूर्णम् ॥**



॥ श्रीः ॥

# ॥ श्रीकामेश्वरस्तोत्रम् ॥



ककाररूपाय करात्तपाश-
सृणीक्षुपुष्पाय कलेड्ढराय ।
काकोदरस्रग्विलसद्गलाय
कामेश्वरायास्तु नतेः सहस्रम् ॥ १ ॥

कनत्सुवर्णाभजटाधराय
सनत्कुमारादिमुनीडिताय ।
नमत्कलादानधुरंधराय
कामेश्वरायास्तु नतेः सहस्रम् ॥ २ ॥

कराम्बुजातम्रदिमावधूत-
प्रवालगर्वाय दयामयाय ।
दारिद्र्यदावामृतवृष्टये ते
कामेश्वरायास्तु नतेः सहस्रम् ॥ ३ ॥

कल्याणशैलेषुधयेऽहिराज-
गुणाय लक्ष्मीधवसायकाय ।
पृथ्वीरथायागमसैन्धवाय
कामेश्वरायस्तु नतेः सहस्रम् ॥ ४ ॥

कल्याय बल्याशरसङ्गभेदे
तुल्या न सन्त्येव हि यस्य लोके ।
शल्यागहर्त्रे विनतस्य तस्मै
कामेश्वरायास्तु नतेः सहस्रम् ॥ ५ ॥

कान्ताय शैलाधिपतेः सुताया
घटोद्भवात्रेयमुखार्चिताय ।
अघौघविध्वंसनपाण्डिताय
कामेश्वरायास्तु नतेः सहस्रम् ॥ ६ ॥

कामारये काङ्क्षितदाय शीघ्रं
त्रात्रे सुराणां निखिलाद्भयाच्च ।
चलत्फणीन्द्रश्रितकंधराय
कामेश्वरायास्तु नतेः सहस्रम् ॥ ७ ॥

कालान्तकाय प्रणतार्तिहन्त्रे
तुलाविहीनास्यसरोरुहाय ।
निजाङ्गसौन्दर्यजिताङ्गजाय
कामेश्वरायास्तु नतेः सहस्रम् ॥ ८ ॥

कैलासवासादरमानसाय
कैवल्यदाय प्रणतव्रजस्य ।
पदाम्बुजानम्रसुरेश्वराय
कामेश्वरायास्तु नतेः सहस्रम् ॥ ९ ॥

हतारिषट्कैरनुभूयमान-
निजस्वरूपाय निरामयाय ।
निराकृतानेकविधामयाय
कामेश्वरायास्तु नतेः सहस्रम् ॥ १० ॥

हतासुराय प्रणतेष्टदाय
प्रभाविनिर्धूतजपासुमाय ।
प्रकर्षदाय प्रणमज्जनानां
कामेश्वरायास्तु नतेः सहस्रम् ॥ ११ ॥

हराय ताराधिपशेखराय
तमालसङ्काशगलाज्ज्वलाय ।
तापत्रयाम्भोनिधिबाडबाय
कामेश्वरायास्तु नतेः सहस्रम् ॥ १२ ॥

हृद्यानि पद्यानि विनिःसरन्ति
मुखाम्बुजाद्यत्पदपूजकानाम् ।
विना प्रयत्नं कमपीह तस्मै
कामेश्वरायास्तु नतेः सहस्रम् ॥ १३ ॥

इति श्रीकामेश्वरस्तोत्रं संपूर्णम् ॥



श्रीकिग्गक्षेत्रे

# ॥ श्रीमदृश्यशृङ्गेश्वरस्तुतिः ॥



कष्टारिवर्गदलनं
    शिष्टालिसमर्चिताङ्घ्रिपाथोजम् ।
नष्टाविद्यैर्गम्यं
    पुष्टात्माराधकालिमाकलये ॥ १ ॥

प्राणायामैर्ध्यानै-
    र्नष्टं चित्तं विधाय मुनिवर्याः ।
यत्पश्यन्ति हृदब्जे
    शान्ताभाग्यं नमामि तत्किंचित् ॥ २ ॥

वेदोत्तमाङ्गगेयं
    नादोपास्त्यादिसाधनात्माख्यम् ।
खेदोन्मूलनदक्षं
    भेदोपाध्यादिवर्जितं नौमि ॥ ३ ॥

शान्तामानसहस
　　कान्तारासक्तमुनिवरैः सेव्यम् ।
शान्ताहंकृतिवेद्यं
　　कान्तार्धं नौमि शृङ्गशिवम् ॥ ४ ॥

इति श्रीमदृश्यशृङ्गेश्वरस्तुतिः संपूर्णा ॥



श्रीगरलपुर आर्द्रोत्सवे

# ॥ श्रीकण्ठेशस्तोत्रम् ॥



आर्द्रान्तःकरणस्त्वं
यस्मादीशान भक्तवृन्देषु ।
आर्द्रोत्सवप्रियोऽतः
श्रीकण्ठात्रास्ति नैव संदेहः ॥ १ ॥

द्रष्टुंस्तवोत्सवस्य हि
लोकान्पापात्तथा मृत्योः ।
मा भीरस्त्विति शंभो
मध्ये तिर्यग्गतागतैर्ब्रूषे ॥ २ ॥

प्रकरोति करुणयार्द्रा-
ञ्छंभुर्नम्रानिति प्रबोधाय ।
धर्मोऽयं किल लोका-
नार्द्रान्कुरुतेऽद्य गौरीश ॥ ३ ॥

आर्द्रा नटेशस्य मनोऽब्जवृत्ति-
रित्यर्थसंबोधकृते जनानाम् ।
आर्द्रर्क्ष एवोत्सवमाह शस्तं
पुराणजालं तव पार्वतीश ॥ ४ ॥

बाणार्चने भगवतः परमेश्वरस्य
प्रीतिर्भवेन्निरुपमेति यतः पुराणैः ।
संबोध्यते परशिवस्य ततः करोति
बाणार्चनं जगति भक्तियुता जनालिः ॥ ५ ॥

यथान्धकं त्वं विनिहत्य शीघ्रं
लोकस्य रक्षामकरोः कृपाब्धे ।
तथाज्ञतां मे विनिवार्य शीघ्रं
विद्यां प्रयच्छाशु सभाधिनाथ ॥ ६ ॥

इति श्रीकण्ठेशस्तोत्रं संपूर्णम् ॥



श्रीगरलपुरे

# ॥ श्रीकण्ठाष्टकम् ॥



यः पादपापिहिततनुः
  प्रकाशतां परशुरामेण ।
नीतः सोऽव्यात्सततं
  श्रीकण्ठः पादनम्रकल्पतरुः ॥ १ ॥

यः कालं जितगर्वं
  कृत्वा क्षणतो मृकण्डुमुनिसूनुम् ।
निर्भयमकरोत्सोऽव्या-
  च्छ्रीकण्ठः पादनम्रकल्पतरुः ॥ २ ॥

कुष्ठापस्मारमुखा
  रोगा यत्पादसेवनात्सहसा ।
प्रशमं प्रयान्ति सोऽव्या-
  च्छ्रीकण्ठः पादनम्रकल्पतरुः ॥ ३ ॥

यदविद्ययैव जगदिद-
मखिलं प्रतिभाति सत्यवत्पूर्वम् ।
ज्ञानात्सोऽव्यात्सततं
श्रीकण्ठः पादनम्रकल्पतरुः ॥ ४ ॥

यमिबृन्दवन्द्यचरणः
कमिता धरणीधरेन्द्रतनयायाः ।
श्रीशादिवन्दितोऽव्या-
च्छ्रीकण्ठः पादनम्रकल्पतरुः ॥ ५ ॥

यो दक्षिणास्यरूपं
धृत्वा विज्ञानदानकृतदीक्षः ।
मुग्धेभ्योऽपि स पाया-
च्छ्रीकण्ठः पादनम्रकल्पतरुः ॥ ६ ॥

अन्धोऽपि यत्करुणया
चक्षुष्मान्भवति सत्वरं लोके ।
करुणानिधिः स पाया-
च्छ्रीकण्ठः पादनम्रकल्पतरुः ॥ ७ ॥

कपिलातटादृतगतिः
  कपिलादिमुनीन्द्रवन्द्यपदपद्मः ।
श्रीदः पायात्सततं
  श्रीकण्ठः पादनम्रकल्पतरुः ॥ ८ ॥

श्रीकण्ठाष्टकमेत-
  त्पठति जनो यः कृतादरः सततम् ।
श्रीविद्यासदनं स
  प्रभवेन्नैवात्र संदेहः ॥ ९ ॥

इति श्रीकण्ठाष्टकं संपूर्णम् ॥



श्रीगरलपुरे

# ॥ श्रीकालान्तकाष्टकम् ॥



कमलापतिमुखसुरवर-
पूजित काकोलभासितग्रीव ।
काकोदरपतिभूषण
कालान्तक पाहि पार्वतीनाथ ॥ १ ॥

कमलाभिमानवारण-
दक्षाङ्घ्रे विमलशेमुषीदायिन् ।
नतकामितफलदायक
कालान्तक पाहि पार्वतीनाथ ॥ २ ॥

करुणासागर शंभो
शरणागतलोकरक्षणधुरीण ।
कारण समस्तजगतां
कालान्तक पाहि पार्वतीनाथ ॥ ३ ॥

प्रणतार्तिहरणदक्ष
प्रणवप्रतिपाद्य पर्वतावास ।
प्रणमामि तव पदाब्जे
कालान्तक पाहि पार्वतीनाथ ॥ ४ ॥

मन्दार नतजनानां
बृन्दारकबृन्दगेयसुचरित्र ।
मुनिपुत्रमृत्युहारि-
न्कालान्तक पाहि पार्वतीनाथ ॥ ५ ॥

माराराण्यदवानल
मायावाराशिकुम्भसंजात ।
मातङ्गचर्मवासः
कालान्तक पाहि पार्वतीनाथ ॥ ६ ॥

मोहान्धकारभानो
मोदितगिरिजामनःसरोजात ।
मोक्षप्रद प्रणमतां
कालान्तकं पाहि पार्वतीनाथ ॥ ७ ॥

विद्यानायक मह्यं
विद्यां दत्त्वा निवार्य चाविद्याम् ।
विद्याधरादिसेवित
कालान्तक पाहि पार्वतीनाथ ॥ ८ ॥

कालान्तकाष्टकमिदं
पठति जनो यः कृतादरो लोके ।
कालान्तकप्रसादा-
त्कालकृता भीर्न संभवेत्तस्य ॥ ९ ॥

इति श्रीकालान्तकाष्टकं संपूर्णम् ॥



|| श्रीः ||

# ।। श्रीचन्द्रचूडालाष्टकम् ।



यमनियमाद्यङ्गयुतै-
योगैर्यत्पादपङ्कजं द्रष्टुम् ।
प्रयतन्ते मुनिवर्या-
स्तमहं प्रणमामि चन्द्रचूडालम् ।। १ ।।

यमगर्वभञ्जनचणं
नमतां सर्वेष्टदानधौरेयम् ।
शमदमसाधनसंप-
ल्लभ्यं प्रणमामि चन्द्रचूडालम् ।। २ ।।

यं द्रोणबिल्वमुख्यैः
पूजयतां द्वारि मत्तमातङ्गाः ।
कण्ठे लसन्ति विद्या-
स्तमहं प्रणमामि चन्द्रचूडालम् ।। ३ ।।

नलिनभवपद्मनेत्र-
प्रमुखामरसेव्यमानपदपद्मम् ।
नतजनविद्यादान-
प्रवणं प्रणमामि चन्द्रचूडालम् ॥ ४ ॥

नुतिभिर्देववराणा
मुखरीकृतमन्दिरद्वारम् ।
स्तुतमादिमवाक्ततिभिः
सततं प्रणमामि चन्द्रचूडालम् ॥ ५ ॥

जन्तोस्तव पदपूजन-
करणात्करपद्मगाः पुमर्थाः स्युः ।
मुरहरपूजितपादं
तमहं प्रणमामि चन्द्रचूडालम् ॥ ६ ॥

चेतसि चिन्तयतां य-
त्पदपद्मं सत्वरं वक्त्रात् ।
निःसरति वाक्सुधाभा
तमहं प्रणमामि चन्द्रचूडालम् ॥ ७ ॥

नम्राज्ञानतमस्तति-
दूरीकरणाय नेत्रलक्ष्याद्यः ।
धत्तेऽग्निचन्द्रसूर्या-
स्तमहं प्रणमामि चन्द्रचूडालम् ॥ ८ ॥

अष्टकमतत्पठता
स्पष्टतरं कष्टनाशनं पुंसाम् ।
अष्ट ददाति हि सिद्धी-
रिष्टसमष्टीश्च चन्द्रचूडालः ॥ ९ ॥

इति श्रीचन्दचूडालाष्टकं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीभवबन्धविमोचनशिवस्तुतिः ॥



रदच्छदाधःकृतबिम्बगर्वः
पदप्रणम्राहितसर्वविद्यः ।
कैलासशृङ्गादृतनित्यवासो
धुनोतु शीघ्रं भवबन्धमीशः ॥ १ ॥

राकाशशाङ्कप्रतिमानकान्तिः
कोकाहितप्रोल्लसदुत्तमाङ्गः ।
शैलेन्द्रजालिङ्गितवामभागो
धुनोतु शीघ्रं भवबन्धमीशः ॥ २ ॥

इति श्रीभवबन्धविमोचनशिवस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीशंभुस्तवः ॥



कैलासशैलनिलयात्कलिकल्मषघ्ना-
    च्चन्द्रार्धभूषितजटाद्रुटमूलवासात् ।
नम्रोत्तमाङ्गविनिवेशितहस्तपद्मा-
    च्छंभोः परं किमपि दैवमहं न जाने ॥ १ ॥

नाकाधिनाथकरपल्लवसेविताङ्घ्रे-
    र्नागास्यषण्मुखविभासितपार्श्वभागात् ।
निर्व्याजपूर्णकरुणान्निखिलामरेड्या-
    च्छंभोः परं किमपि दैवमहं न जाने ॥ २ ॥

मौनीन्द्ररक्षणकृते जितकालगर्वा-
    त्पापाब्धिशोषणविधौ जितबाडवाग्नेः ।
माराङ्गभस्मपरिलेपनशुक्लगात्रा-
    च्छंभोः परं किमपि दैवमहं न जाने ॥ ३ ॥

विज्ञानमुद्रितकराच्छरदिन्दुशुभ्रा-
दिज्ञानदाननिरताज्जडपङ्क्तयेऽपि ।
वेदान्तगेयचरणाद्विधिविष्णुसेव्या-
च्छंभोः परं किमपि दैवमहं न जाने ॥ ४ ॥

इति श्रीशंभुस्तवः संपूर्णः ॥



॥ श्रीः ॥

# ॥ श्रीधीरगुरुभूतेश्वरस्तोत्रम् ॥



माङ्गल्यदाननिरत प्रणमज्जनानां
    मान्धातृमुख्यधरणीपतिचिन्तिताङ्घ्रे ।
मान्द्यान्धकारविनिवारणचण्डभानो
    मां पाहि धीरगुरुभूत शशाङ्कमौले ॥ १ ॥

मां प्राप्नुयादखिलसौख्यकरी सुधीश्च
    माकन्दतुल्यकविता सकलाः कलाश्च ।
काचित्कयत्पदसरोजनतेर्हि स त्वं
    मां पाहि धीरगुरुभूत शशाङ्कमौले ॥ २ ॥

मातङ्गकृत्तिवसन प्रणतार्तिहारि-
    न्मायासरित्पतिविशोषणबाडवाग्ने ।
मानोन्नतिप्रद निजाङ्घ्रिजुषां नराणां
    मां पाहि धीरगुरुभूत शशाङ्कमौले ॥ ३ ॥

इति श्रीधीरगुरुभूतेश्वरस्तोत्रं संपूर्णम् ॥

श्रीशैलक्षेत्रे

## ॥ श्रीमल्लिकार्जुनप्रश्नमालिकास्तवः ॥



का संबुद्धिर्नक्षत्रेशः
केन विराजति मातृत्सङ्गः ।
गिरिवरपुत्र्याः पत्युः शीर्षे
केन विराजति वदत कवीन्द्राः ॥ १ ॥

का भाति रमणीशीर्षे
को हन्ता शल्यसारथेः ।
भ्रमराम्बापतिः को वा
वदन्तु विबुधोत्तमाः ॥ २ ॥

षट्चरणस्य च का संबुद्धि-
र्लोके जन्तोः का हितजननी ।
साध्व्याश्चित्ते भाति च को वा
श्रीशैलाग्रे राजति कश्च ॥ ३ ॥

इति श्रीमल्लिकार्जुनप्रश्नमालिकास्तवः संपूर्णः ॥

१. चन्द्र+किशोरेण=चन्द्राकिशोरेण ; २. मल्लिका+अर्जुनः=मल्लिकार्जुनः ; ३. भ्रमर+अम्बा+पतिः=भ्रमराम्बापतिः.

श्रीदेवदानक्षेत्रे

# श्रीगिरिपल्लवनाथेश्वरस्तुतिः



पल्लवसदक्षतावक-
पदविन्यासाज्जगाम पल्लवताम् ।
यद्गिरिरसौ ततस्त्वं
गिरिपल्लवनाथशब्दवाच्योऽभूः ॥ १ ॥

वृक्षलतानां पल्लव-
मिह सिद्धं नैव भूमिधर्तुर्हि ।
शक्तिस्तवाद्भुतातो
गिरिपल्लवमत्र दृष्टमतिचित्रम् ॥ २ ॥

गङ्गाधर करुणाकर
बिम्बाधर बालकुमुदबन्धुधर ।
गरलाम्बरविनिवारण
पादसरोजे नमस्ये ते ॥ ३ ॥

इति श्रीगिरिपल्लवनाथेश्वरस्तुतिः संपूर्णा ॥

श्रीदूर्वाक्षेत्रे

[ अरवङ्कुलापरनामके ]

# ॥ श्रीदूर्वेशस्तोत्रम् ॥



गणनाथषण्मुखयुतो
गिरिजासंश्लेषतुष्टहृदयाब्जः ।
दूर्वाभिख्यपुरस्थाँ-
ल्लोकान्परिपातु भक्तिविनययुतान् ॥ १ ॥

विद्यानाथ विनीतिभक्तिसहिताँल्लोकान्कृपावारिधे
दूर्वाभिख्यपुरस्थितान्करुणया पाहीभवक्रं यथा ।
विद्यायुःसुखयुक्तिशक्तिभिरलंयुक्तान्विधायानिशं
शान्त्याद्यैरपि दिव्यमुक्तिपदवीसंदर्शकैः शंकर ॥

इति श्रीदूर्वेशस्तोत्रं संपूर्णम् ॥



एत्तमानूर्क्षेत्रे

# ॥ श्रीपरमशिवस्तवः ॥

प्रातर्दक्षिणवदनो
    मध्याह्ने शबररूपधारी च ।
सायं गिरिजायुक्त-
    स्त्रेधा ह्येकोऽपि भासि परमशिव ॥ १ ॥

इति श्रीपरमशिवस्तवः संपूर्णः ॥



श्रीवक्यक्षेत्रे

# ॥ श्रीशिवस्तुतिः ॥



वक्यक्षेत्रनिवासि-
　　न्छक्त्या विनतेष्टवितरणसमर्थ ।
शाक्यमताविषय विभो
　　तर्कविदूरात्मरूप पाहि शिव ॥ १ ॥

इति श्रीशिवस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीशिवनवरत्नमालास्तवः ॥



कलय कलावित्प्रवरं
  कलया नीहारदीधितेः शीर्षम् ।
सततमलंकुर्वाण
  प्रणतावनदीक्ष यक्षराजसख ॥ १ ॥

कान्तागेन्द्रसुतायाः
  शान्ताहंकारचिन्त्यचिद्रूप ।
कान्तारखेलनरुचे
  शान्तान्तःकरणमेनमव शंभो ॥ २ ॥

दाक्षायणीमनोऽम्बुज-
  भानो वीक्षावितीर्णविनतेष्ट ।
द्राक्षामधुरिमदभर-
  शिक्षाकर्त्रीं प्रदेहि मम वाचम् ॥ ३ ॥

पारदसमानवर्णो
   नीरदनीकाशदिव्यगलदेशः ।
पादनतदेवसङ्घः
   पशुमनिशं पातु मामीशः ॥ ४ ॥

प्रत्यक्षो भव शंभो
   गुरुरूपेणाशु मेऽद्य करुणाब्धे ।
चिरतरमिह वासं कुरु
   जगतीं रक्षन्प्रबोधदानेन ॥ ५ ॥

यक्षाधिपसखमनिशं
   रक्षाचतुरं समस्तलोकानाम् ।
वीक्षादापितकवितं
   दाक्षायण्याः पतिं नौमि ॥ ६ ॥

यमनियमनिरतलभ्यं
   शमदममुखषट्कदानकृतदीक्षम् ।
रमणीयपदसरोजं
   शमनाहितमाश्रये सततम् ॥ ७ ॥

यमिहन्मानसहंसं
शमिताघौघं प्रणाममात्रेण ।
अमितायुःप्रदपूजं
कमितारं नौमि शैलतनयायाः ॥ ८ ॥

येन कृतमिन्दुमौले
मानववर्येण तावकस्मरणम् ।
तेन जितं जगदखिलं
को न ब्रूते सुरार्यतुल्येन ॥ ९ ॥

इति श्रीशिवनवरत्नमालास्तवः संपूर्णः ॥



॥ श्रीः ॥

# ॥ श्रीशिवस्तुतिकदम्बम् ॥



आह्लादजनकस्याद्य
सांनिध्यात्तव शंकर ।
चन्द्रश्चन्द्रत्वमापेदे
जाने चन्द्रलसज्जट ॥ १ ॥

कालकूटं निगृह्यादा-
वरक्षः सकलं जगत् ।
को वात्र विस्मयः शंभो
कालस्यैकस्य निग्रहे ॥ २ ॥

अभवस्त्वं सूचयितुं
लोकानामर्धनारीशः ।
अर्धो वेत्याम्नायः
स्वार्थपरो नार्थवाद इति ॥ ३ ॥

जडताविदलनदीक्षित
   जडतापद्धतिं करोषि नो चेन्मे ।
दीक्षाभङ्गो न भवे-
   द्दाक्षायण्याश्रिताङ्ग किमु तेन ॥ ४ ॥

पशुपतिमव मां शंभो
   पशुपतिरसि गिरिश यस्मात्त्वम् ।
श्रुतिरप्येवं ब्रूते
   कर्तव्या ह्यात्मरक्षेति ॥ ५ ॥

शीर्षोपरि चन्द्रस्ते
   लोके शास्त्रे च विख्यातः ।
कण्ठोपर्यकलङ्कः
   पूर्णः कोऽयं निशाकरो ब्रूहि ॥ ६ ॥

कवित्ववाराशिशरन्निशेशं
   जडत्वनागेन्द्रविभेदसिंहम् ।
मृगत्वगाबद्धकटिप्रदेशं
   महत्वदं नौमि नताय शंभुम् ॥ ७ ॥

यदङ्घ्रिपाथोरुहसेवनेन
प्रयाति सर्वोत्तमतां जडोऽपि ।
तमम्बिकामानसपद्महंस-
मुपाश्रये सत्वरचित्तशुद्ध्यै ॥ ८ ॥

बहूनां जनानां मनोऽभीष्टजातं
सुसूक्ष्मं वितीर्याशु गर्वायसे त्वम् ।
महेशान यद्यस्ति शक्तिस्तवाहो
मदन्मन्मनोऽभीष्टमाशु प्रयच्छ ॥ ९ ॥

अपां पुष्पार्घस्य प्रतिदिनमहो धारणवशा-
त्प्रभो किं निर्वेदाद्धरणिगतपुष्पालिमधुना ।
रसाद्धत्से शीर्षे शशधरकिरीटागतनया-
सहाय प्रब्रूहि प्रणतजनकारुण्यभरित ॥

बहोः कालात्किं वा शिरसि कृतवासं तव विधुं
वियोगं किं पत्युर्भृशमसहमानाः स्वयमहो ।
समालिङ्गन्त्येताः पतिमतिरसात्पुष्पमिषतः
प्रभो तारास्तस्मादसि सुमकिरीटस्त्वमधुना ॥११॥

भक्तानां हृद्रथानां निजनिजपदवीप्राप्तये पार्वतीशः
　　कारुण्यापारवारांनिधिरगपतिजासंयुतः संभ्रमेण ।
आरुह्यैकं हि बाह्यं रथमिह निखिलांश्चालयन्किं पुरोक्ता-
　　न्गर्वं पक्षीशवाय्वोर्हरति करुणया शीघ्रनम्रेष्टदायी ॥

मत्पापानां बहूनां परिमितिरधुनाधीश नास्त्येव नूनं
　　त्वद्वत्पापोपशान्तिप्रदमिह भुवने नास्ति दैवं च सद्यः ।
तस्मान्मत्पापराशिं दह दह तरसा देहि शुद्धां च बुद्धिं
　　स्रोतः श्रेष्ठावतंस प्रणतभयहर प्राणनाथागजायाः ॥

कामं सन्तु सुराः स्वपादनमनस्तोत्रार्चनाभिश्चिरं
　　देहं कर्शयते जनाय फलदास्तान्नाश्रये जात्वपि ।
यो जात्वप्यवशात्स्वनाम वदते लोकाय शीघ्रेष्टदः
　　सोऽव्याद्धेतुविहीनपूर्णकरुणः कान्तायितार्धः शिवः ॥

नित्यानित्यविवेकभोगविरती शान्त्यादिषट्कं तथा
　　मोक्षेच्छामनपायिनीं वितर भो शंभो कृपावारिधे ।
वेदान्तश्रवणं तदर्थमननं ध्यानं चिरं ब्रह्मणः
　　सच्चिद्रूपतनोरखण्डपरमानन्दात्मनः शंकर ॥ १९ ॥

मन्नीकाशतनुं प्रगृह्य करुणावारांनिधे सत्वरं
श्रृङ्गाद्रौ वस मोदतः करुणया व्याख्यानसिंहासने।
कुर्वँल्लोकततिं स्वधर्मनिरतां सौख्यैरशेषैर्वृता-
मद्वैतात्मविबोधपूर्णहृदयां चातन्वपर्णापते ॥ १६ ॥

यत्पदाम्बुजसमर्चनसक्ता
. सक्तिमाशु विषयेषु विहाय।
सच्चिदात्मनि विलीनमनस्काः
संभवन्ति तमहं शिवमीडे ॥ १७ ॥

रजनीवल्लभचूडो
रजनीचरसेव्यपदपद्मः।
राकाशशाङ्कधवलो
राजति रमणीगृहीतवामाङ्गः ॥ १८ ॥

करवाणीतनुभिस्ते
करवाणीशाङ्घ्रिसंनतिं मोदात्।
करवाणीतनुशुद्ध्यै
करवाणीश्रीबहुत्वाय ॥ १९ ॥

इति श्रीशिवस्तवकदम्बं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीशिवसुवर्णमालास्तवः ॥



अनेककोटिब्रह्माण्ड-
जननीनायकप्रभो ।
अनेकपमुखस्कन्द-
परिसेवित पाहि माम् ॥ १ ॥

आकरापारनिर्व्याज-
करुणायाः सतीपते ।
आशाभिपूरकानम्र-
वितते: पाहि शंकर ॥ २ ॥

इभाश्वमुखसंपत्ति-
दानदक्षकृपालव ।
इष्ट प्रालेयशैलेन्द्र-
पुत्र्याः पाहि गिरीश माम् ॥ ३ ॥

ईहाशून्यजनावाप्य
 नतानन्दाब्धिचन्द्रमः ।
ईशान सर्वविद्याना-
 मिन्दुचूड सदाव माम् ॥ ४ ॥

उरगाधिपसंराज-
 त्पदपङ्केरुहद्वय ।
उडुराजकृतोत्तंस
 गिरिजासख मामव ॥ ५ ॥

ऊरीकृतविनम्रेष्ट-
 पूगसंपूरणव्रत ।
अखिलामरकोटीर-
 निघृष्टपद पाहि माम् ॥ ६ ॥

ऋद्धिदाम्भोजवासायाः
 काममाशु नमस्ततेः ।
शैलेन्द्रतनयाश्लिष्ट
 शर्व मां पाहि सर्वदा ॥ ७ ॥

ॠस्वराख्येयरूपाय
भूतिदायादराद्धुतम् ।
षण्मुखेभास्यपूज्याय
नमश्चन्द्रार्धमौलये ॥ ८ ॥

ऌकाराख्याय लक्ष्मीश-
द्रुहिणाद्यर्चिताङ्घ्रये ।
अपारकरुणाजन्म-
भूमये शंभवे नमः ॥ ९ ॥

ॡस्वरूप ललाटाक्ष
लाकिन्यादिनिषेवित ।
लावण्याकर कारुण्य-
वारिधे पाहि मां प्रभो ॥ १० ॥

घृणाङ्कचूड काणाद-
शास्त्रप्रज्ञाप्रदायक ।
शोणाधर नमस्यामि
त्वत्पादाम्बुरुहद्वयम् ॥ ११ ॥

ऐहिकामुष्मिके पुंसां
सुलभे यत्पदार्चनात् ।
चन्द्रार्धविलसन्मौलिं
नमामि तमुमापतिम् ॥ १२ ॥

ओमित्याख्यां यस्य वेदा
वेदान्ताश्च जगुर्मुहुः ।
ओंकारजपतुष्टं तं
नौमि चन्द्रार्धशेखरम् ॥ १३ ॥

औदासीन्यं समस्तेषु
विषयेषु प्रकुर्वताम् ।
सुलभं जगदीशानं
पार्वतीपतिमाश्रये ॥ १४ ॥

अंगशोभापराभूत-
कोटिराकानिशाकरम् ।
अन्धकान्तककामादि-
गर्वहारिणमाश्रये ॥ १५ ॥

अश्च उश्च मकारश्च
यन्नामावयवाक्षराः ।
अशेषशुभदातारं
तं नौमि शशिशेखरम् ॥ १६ ॥

कविता वृणुते रतीशतुल्यं
पतिमास्थासहितेव मानिनी ।
तरसा पुरुषं यदङ्घ्रिनम्रं
तमहं नौमि शशाङ्कबालचूडम् ॥ १७ ॥

खण्डेन चान्द्रेण किरीटगेन
विराजमानं वृषभाधिरूढम् ।
खवायुतेजोऽम्बुधरादिरूपं
नमामि शैलेन्द्रसुतासमेतम् ॥ १८ ॥

गद्यानि पद्यानि च शीघ्रमेव
मूकस्य वक्त्रादपि निःसरन्ति ।
यदीयकारुण्यलवात्तमीशं
नमामि चन्द्रार्भकभासिमौलिम् ॥ १९ ॥

घटोद्भवाद्या मुनयो यदङ्घ्रि-
समर्चनातो महतीं प्रपन्नाः ।
सिद्धिं तमानम्रजनेष्टदान-
निबद्धदीक्षं प्रणमामि शंभुम् ॥ २० ॥

ङकारवाच्याय नमज्जनौघ-
विद्याप्रदानप्रवणाय शीघ्रम् ।
वटागमूलैकनिकेतनाय
श्रीदक्षिणास्याय नमः शिवाय ॥ २१ ॥

चयेन भासां वपुषश्चकोर-
बन्धुं जयन्तं जितपुष्पचापम् ।
प्रालेयशैलेन्द्रसुतामनोऽब्ज
भानुं भजे कंचन देववर्यम् ॥ २२ ॥

छत्रं च वालव्यजने मनोज्ञे
समुद्रकाञ्चीं पृथिवीं च लोकाः ।
जवाद्व्रजन्तेऽप्यतिकिंपचाना
यदङ्घ्रिनम्रास्तमुमेशमीडे ॥ २३ ॥

जन्मस्वनेकेषु विधाय धर्मा-
   न्स्ववर्णयोग्यान्मनुजोऽतिभक्त्या ।
जिज्ञासते यत्पदमादरेण
   तं नौमि सच्चित्सुखरूपमीशम् ॥ २४ ॥

झरीं दधानं दिविषत्तटिन्या
   झटित्ययोग्यानपि भक्तिपूर्णान् ।
पुनानमर्धेन्दुलसत्किरीटं
   युवानमीशं कलयामि चित्ते ॥ २५ ॥

ञकाररूपाय रवीन्दुवह्नि-
   नेत्राय नानाविधरूपधर्त्रे ।
लोकावनायातिमनोहराय
   शैलेन्द्रकन्यापतये नमोऽस्तु ॥ २६ ॥

टवर्णवाच्याय तटित्प्रभाय
   यमादियोगाङ्गविदर्चिताय ।
शमादिसंपत्सहिताप्यपाद-
   पद्माय गौरीपतये नमोऽस्तु ॥ २७ ॥

ठ्युक्त्रिवर्णप्रतिपादिताय
हराय निःशेषविषाघहर्त्रे ।
श्रीनीलकण्ठाय यमिप्रवीर-
ध्येयाय कुर्मः प्रणतिं प्रमोदात् ॥ २८ ॥

डामरप्रमुखदुःखसमूह-
ध्वंसदक्षचरणस्मरणस्य ।
शैलजाहृदयपङ्कजभानोः
शंकरस्य चरणौ प्रणतोऽस्मि ॥ २९ ॥

ढकाख्यवाद्यश्रवणोत्सुकाय
प्रौढाय कन्दर्पशरप्रभेदे ।
शिवाय चन्द्रार्धलसज्जटाय
कुर्मः प्रमोदात्प्रणतेः सहस्रम् ॥ ३० ॥

णान्तदादिहरिदुन्मुखमूर्ते
नाकनाथपरिसेवितपाद ।
वासलोल वटवृक्षतले मां
वारणास्यमिव पाहि दयालो ॥ ३१ ॥

तप्ताः संसृतिवह्निना भुवि नराः संप्राप्य सद्देशिकं
　तस्यास्याच्छ्रुतिशीर्षवाक्यनिचयं श्रुत्वार्थयुक्तं मुहुः ।
युक्त्या श्रुत्यविरुद्धया तदनुसंचिन्त्यार्थमाद्योदितं
　ध्यात्वाजस्रमवाप्नुवन्ति यमहं तं नौमि गौरीपतिम् ॥

थाथैयेति समस्तदेववनिता नृत्यं यदग्रेऽन्वहं
　कुर्वन्त्यम्बुजसंभवप्रभृतयः स्तुन्वन्ति वेदैश्च यम् ।
इन्द्राणीशरमाधवादिमसुरा यस्यार्चनां कुर्वते
　कल्पागप्रभवैः सुमैस्तमनिशं नौम्यद्रिजावल्लभम् ॥

श्रीरामेश्वरक्षेत्रे

# ॥ श्रीरामनाथस्तुतिः ॥



श्रीरामपूजितपदाम्बुज चापपाणे
  श्रीचक्रराजकृतवास कृपाम्बुराशे ।
श्रीसेतुमूलचरणप्रवणान्तरङ्ग
  श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥

नम्राघबृन्दविनिवारणबद्धदीक्ष
  शैलाधिराजतनयापरिरब्धवर्ष्मन् ।
श्रीनाथमुख्यसुरवर्यनिषेविताङ्घ्रे
  श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ २ ॥

शूराहितेभवदनाश्रितपार्श्वभाग
  क्रूरारिवर्गविजयप्रद शीघ्रमेव ।
साराखिलागमतदन्तपुराणपङ्क्तेः
  श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ ३ ॥

शब्दादिमेषु विषयेषु समीपगेष्व-
प्यासक्तिगन्धरहितान्निजपादनम्रान् ।
कुर्वाण कामदहनाक्षिलसल्ललाट
श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ ४ ॥

इति श्रीरामनाथस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीदक्षिणामूर्तिदशकम् ॥



पुन्नागवारिजात-
प्रभृतिसुमस्रग्विभूषितग्रीवः ।
पुरगर्वमर्दनचणः
पुरतो मम भवतु दक्षिणामूर्तिः ॥ १ ॥

पूजितपदाम्बुजातः
पुरुषोत्तमदेवराजपद्मभवैः ।
पूगप्रदः कलानां
पुरतो मम भवतु दक्षिणामूर्तिः ॥ २ ॥

हालाहलोज्ज्वलगलः
शैलादिप्रवरगणैर्वीतः ।
कालाहंकृतिदलनः
पुरतो मम भवतु दक्षिणामूर्तिः ॥ ३ ॥

कैलासशैलनिलयो
लीलालेशेन निर्मिताजाण्डः ।
बालाब्जकृतवतंसः
पुरतो मम भवतु दक्षिणामूर्तिः ॥ ४ ॥

चेलजितकुन्ददुग्धो
लोलः शैलाधिराजतनयायाम् ।
फालविराजद्वह्निः
पुरतो मम भवतु दक्षिणामूर्तिः ॥ ५ ॥

न्यग्रोधमूलवासी
न्यक्कृतचन्द्रो मुखाम्बुजातेन ।
पुण्यैकलभ्यचरणः
पुरतो मम भवतु दक्षिणामूर्तिः ॥ ६ ॥

मन्दार आनततते-
र्वृन्दारकवृन्दवन्दितपदाब्जः ।
वन्दारुपूर्णकरुणः
पुरतो मम भवतु दक्षिणामूर्तिः ॥ ७ ॥

मुक्तामालाभूष-
स्त्यक्ताशप्रवरयोगिभिः सेव्यः ।
भक्ताखिलेष्टदायी
पुरतो मम भवतु दक्षिणामूर्तिः ॥ ८ ॥

मुद्रामालामृतघट-
पुस्तकराजत्कराम्भोजः ।
मुक्तिप्रदाननिरतः
पुरतो मम भवतु दक्षिणामूर्तिः ॥ ९ ॥

स्तोकार्चनपरितुष्टः
शोकापहपादपङ्कजस्मरणः ।
लोकावनकृतदीक्षः
पुरतो मम भवतु दक्षिणामूर्तिः ॥ १० ॥

**इति श्रीदक्षिणामूर्तिदशकं संपूर्णम् ॥**



॥ श्रीः ॥

# ॥ श्रीदक्षिणामूर्त्यष्टकम् ॥



पायय जनमिममममृतं
दुर्लभमितरस्य लोकस्य ।
नतजनपालनदीक्षित
मेधावीदक्षिणामूर्ते ॥ १ ॥

स्तोतुं वा नन्तुं वा
जडविषयासक्तहृन्न शक्नोमि ।
नैसर्गिकीं कुरु कृपां
मयि वटतटवास दक्षिणामूर्ते ॥ २ ॥

स्फुरतु मम हृदि तनुस्ते
पुस्तकमुद्राक्षमालिकाकुम्भान् ।
दधती चन्द्रार्धलस-
च्छीर्षा श्रीदक्षिणामूर्ते ॥ ३ ॥

सहमान दक्षिणानन
सहमानविहीनमत्कमन्तुततीः ।
सहमानत्वं त्यज वा
युक्तं कुर्वत्र यद्विभाति तव ॥ ४ ॥

मेधाप्रज्ञे जन्ममूकोऽपि लोकः
प्राप्नोत्यङ्घ्रिं पूजयन्यस्य लोके ।
तं पादाम्भोजातनम्रामरालिं
मेधाप्रज्ञादक्षिणामूर्तिमीडे ॥ ५ ॥

गङ्गानिर्झरिणी हिमाद्रिकुहराद्यद्वत्सुधांशोः प्रभा
निर्गच्छत्यतिवेगतः क्रमपि च त्यक्त्वा प्रयत्नं मुहुः ।
तद्वद्यत्पदभक्तवक्त्रकुहराद्वाणी जवान्निःसरे-
त्तं वन्दे मुनिबृन्दवन्द्यचरणं श्रीदक्षिणास्यं मुदा ॥

अप्पित्तार्कशशाङ्कनेत्रमगजासंलिङ्गिताङ्गं कृपा-
वाराशिं विधिविष्णुमुख्यदिविजैः संसेविताङ्घ्रिं मुदा ।
नन्दीशप्रमुखैर्गणैः परिवृतं नागास्यषड्वक्त्रयु-
क्पार्श्वं नीलगलं नमामि वटभूरुण्मूलवासं शिवम् ॥

शीतांशुप्रतिमानकान्तिवपुषं पीताम्बुराश्यादिभि-
मौनीन्द्रैः परिचिन्त्यमानमनिशं मोदाद्धृदम्भोरुहे ।
शान्तानङ्गकटाक्षिभासिनिटिलं कान्तार्धकायं विभुं
वन्दे चित्रचरित्रमिन्दुमुकुटं न्यग्रोधमूलाश्रयम् ॥

इति श्रीदक्षिणामूर्त्यष्टकं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीदक्षिणास्यभुजङ्गप्रयातस्तुतिः ॥



भवाम्भोधिपारं नयन्तं स्वभक्ता-
न्कृपापूरपूर्णैरपाङ्गैः स्वकीयैः ।
समस्तागमान्तप्रगीतापदानं
सदा दक्षिणास्यं तमाराधयेऽहम् ॥ १ ॥

चतुर्विंशदर्णस्य मन्त्रोत्तमस्य
प्रजापाद्दृढं वश्यभावं समेत्य ।
प्रयच्छत्यरं यश्च विद्याममोघां
सदा दक्षिणास्यं तमाराधयेऽहम् ॥ २ ॥

जडायापि विद्यां प्रयच्छन्तमाशु
प्रपन्नार्तिविध्वंसदक्षाभिधानम् ।
जराजन्ममृत्यून्हरन्तं प्रमोदा-
त्सदा दक्षिणास्यं तमाराधयेऽहम् ॥ ३ ॥

यमाराध्य पद्माक्षपद्मोद्भवाद्याः
सुराग्र्याः स्वकार्येषु शक्ता बभूवुः ।
रमाभारतीपार्वतीस्तूयमानं
सदा दक्षिणास्यं तमाराधयेऽहम् ॥ ४ ॥

सुधासूतिबालोल्लसन्मौलिभागं
सुधाकुम्भमालालसत्पाणिपद्मम् ।
सपुत्रं सदारं सशिष्यं सवाहं
सदा दक्षिणास्यं तमाराधयेऽहम् ॥ ५ ॥

गजास्याग्निभूसेव्यपादारविन्दं
गजाश्वादिसंपत्तिहेतुप्रणामम् ।
निजानन्दवाराशिराकासुधांशुं
शुचीन्द्वर्कनेत्रं भजे दक्षिणास्यम् ॥ ६ ॥

गुणान्षट्शमादीनिहामुत्र भोगे
विरक्तिं विवेकं ध्रुवानित्ययोश्च ।
मुमुक्षां च शीघ्रं लभेत प्रसादा-
त्तमानन्दकन्दं भजे दक्षिणास्यम् ॥ ७ ॥

जडो जन्ममूकोऽपि यन्मन्त्रजप्तुः
करस्पर्शनात्स्यात्सुराचार्यतुल्यः ।
तमज्ञानवारांनिधेर्बाडबाग्निं
मुदा सर्वकालं भजे दक्षिणास्यम् ॥ ८ ॥

जहौ मृत्युभीतिं यदीयाङ्घ्रिपद्मं
सदा पूजयित्वा मृकण्डोस्तनूजः ।
तमद्रीन्द्रकन्यासमाश्लिष्टदेहं
कृपावारिराशिं भजे दक्षिणास्यम् ॥ ९ ॥

पुरा कामयाना पतिं स्वानुरूपं
चरित्वा तपो दुष्करं शैलकन्या ।
अवापादराद्या रुचा कामगर्वं
हरन्तं तमन्तर्भजे दक्षिणास्यम् ॥ १० ॥

यदीयाङ्घ्रिसेवापराणां नराणां
सुसाध्या भवेयुर्जवात्सर्वयोगाः ।
हठाद्याः शिवान्ता यमाद्यङ्गयुक्ता
मुदा सन्ततं तं भजे दक्षिणास्यम् ॥ ११ ॥

वटागस्य मूले वसन्तं सुरस्त्री-
कदम्बैः सदा सेव्यमानं प्रमोदात् ।
वरान्कामितान्नम्रपङ्क्त्यै दिशन्तं
दयाजन्मभूमिं भजे दक्षिणास्यम् ॥ १२ ॥

विधूताभिमानैस्तनौ चक्षुरादा-
वहंत्वेन संप्राप्यमेकाग्रचित्तैः ।
यतीन्द्रैर्गुरुश्रेष्ठविज्ञाततत्त्वै-
र्महावाक्यगूढं भजे दक्षिणास्यम् ॥ १३ ॥

शुकाद्या मुनीन्द्रा विरक्ताग्रगण्याः
समाराध्य यं ब्रह्मविद्यामवापुः ।
तमल्पार्चनातुष्टचेतोऽम्बुजातं
चिदान्दरूपं भजे दक्षिणास्यम् ॥ १४ ॥

श्रुतेर्युक्तितश्चिन्तनाद्ध्यानयोगा-
द्ववेद्यस्य साक्षात्कृतिः पुण्यभाजाम् ।
अखण्डं सदानन्दचिद्रूपमन्तः
सदाहं मुदा तं भजे दक्षिणास्यम् ॥ १५ ॥

सुवर्णाद्रिचापं रमानाथबाणं
   दिनेशेन्दुचक्रं धरास्यन्दनाभ्यम् ।
विधिं सारथिं नागनाथं च मौर्वीं
   प्रकुर्वाणमीशं भजे दक्षिणास्यम् ॥ १६ ॥

कराम्भोरुहैः पुस्तकं बोधमुद्रां
   सुधापूर्णकुम्भं स्रजं मौक्तिकानाम् ।
दधानं धराधीशमौलौ शयानं
   शशाङ्कार्धचूडं भजे दक्षिणास्यम् ॥ १७ ॥

कलादानदक्षं तुलाशून्यवक्त्रं
   शिलादात्मजेड्यं वलारातिपूज्यम् ।
जलाद्यष्टमूर्तिं कलालापयुक्तं
   फलालिं दिशन्तं भजे दक्षिणास्यम् ॥ १८ ॥

यदालोकमात्रान्नतानां हृदब्जे
   शमाद्या गुणाः सत्वरं संभवन्ति ।
प्रणम्रालिचेतःसरोजातभानुं
   गुरुं तं सुरेड्यं नमामो भजामः ॥ १९ ॥

पिनद्धानि भक्त्याख्यसूत्रेण कण्ठे
सदेमानि रत्नानि धत्ते दृढं यः ।
मुदा मुक्तिकान्ता द्रुतं तं वृणीते
स्वयं शान्तिदान्तिप्रमुख्यालियुक्ता ॥ २० ॥

इति श्रीदक्षिणास्यभुजङ्गप्रयातस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीदक्षिणास्यनक्षत्रमालास्तोत्रम् ।



श्रीकण्ठमिन्दर्भकभासिचूडं
  श्रीज्ञानदानव्रतबद्धदीक्षम् ।
श्रीशाम्बुजन्मप्रभवादिपूज्यं
  श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १ ॥

हरन्तमानम्रजनानुताप
  हयेभवक्त्रेक्रीडितपादपद्मम् ।
हृदा मुनीन्द्रैः परिचिन्त्यमानं
  श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २ ॥

हस्ताब्जराजद्दरपुस्तमुद्रा-
  मुक्ताक्षमालामृतपूर्णकुम्भम् ।
हरिद्रवाकाङ्क्षितपादसेवं
  श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ ३ ॥

हंसाग्निचन्द्रेक्षणमन्धकारि-
माकारनिर्धूतमनोजगर्वम् ।
ह्रतादिमाज्ञानमगोद्भवेशं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ ४ ॥

हत्वा पुरा कालमखर्वगर्वं
मृकण्डुसूनोः परिरक्षणं यः ।
चकार कारुण्यवशात्तमेनं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ ५ ॥

ह्रत्वा तमः सत्वरमेव हार्दं
दत्त्वा च बोधं परमार्थसंस्थम् ।
मोक्षं ददात्याशु नताय यस्तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ ६ ॥

हसन्मुखाम्भोरुहमिन्दुकुन्द-
नीकाशदन्तावलिशोभमानम् ।
रदाम्बराधःकृतपक्वबिम्बं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ ७ ॥

हेलालवान्निर्मितविश्वबृन्दं
बालारुणाभाङ्घ्रियुगं दयालुम् ।
पश्यन्तमुत्सङ्गगतं षडास्यं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ ८ ॥

ह्रीमान्भवेद्देवगुरुर्यदीय-
पादाब्जसंसेवकलोकवाचा ।
तं दिव्यवाग्दानधुरीणमाशु
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ ९ ॥

हारायिताहीशमनङ्गगर्व-
भङ्गप्रगल्भान्प्रणतानशेषान् ।
कुर्वन्तमिष्टप्रदमष्टमूर्तिं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १० ॥

हरिर्जहाराचलकन्यका च
यद्वर्ष्मणोऽर्धं तपसा हि पूर्वम् ।
अतोऽशरीरं तमशेषसंस्थं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ ११ ॥

हन्यादशेषं कलुषं यदङ्घ्रि-
पूजा प्रदद्यादपि सर्वमिष्टम् ।
तं पार्वतीमानसराजहंसं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १२ ॥

हठादियोगान्प्रविधाय चित्त-
स्थैर्यं प्रपद्याङ्घ्रियुगं यदीयम् ।
ध्यायन्ति योगिप्रवरा मुदा तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १३ ॥

हितोपदेष्टा दयया नतानां
निसर्गया यो यमिनां जवाद्धि ।
न्यग्रोधमूलैकनिकेतनं तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १४ ॥

हतारिषट्कैरनुभूयमानं
नितान्तमानन्दघनस्वरूपम् ।
नतापराधान्सहमानमीशं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १५ ॥

हित्वा धनापत्यकलत्रबन्धू-
न्दत्त्वाभयं भूततर्तेर्द्विजाग्र्याः ।
यं यान्ति लोके शरणं सदा तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १६ ॥

हृदम्बुजाते विनिवेश्य चित्तं
निरुध्य चक्षुःप्रमुखाक्षवर्गम् ।
ध्यायन्ति यं शैलसुतायुतं तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १७ ॥

हासप्रभानिर्जितभाभिमानं
प्रासार्थजुष्टां कवितां दिशन्तम् ।
नतोत्तमाङ्गेषु करं दधानं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १८ ॥

हैय्यङ्गवीनं हृदयम्रदिम्ना
स्वरेण हंसं चरणेन पद्मम् ।
हसन्तमंसाग्रलसज्जटालं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १९ ॥

हरेर्विधेश्चैव विवादशान्त्यै
लिङ्गात्मना यः प्रबभूव पूर्वम् ।
तमादिमध्यान्तविहीनरूपं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २० ॥

हुताशनादित्यमहीप्रमुख्या
यस्याष्टमूर्तीर्निजगाद वेदः ।
तं सर्वलोकावनसक्तचित्तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २१ ॥

हस्त्यन्तलक्ष्मीमपि दीनवर्यः
प्राप्नोति यत्पादसरोजनत्या ।
तं कल्पवल्लीमदभङ्गदक्षं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २२ ॥

हयाग्र्यमारुह्य गजोत्तमं वा
समेत्य यत्पादयुगार्चकाय ।
यच्छन्ति राज्यं धरणीधवास्तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २३ ॥

हवींषि संजुह्वति भूसुराग्र्याः
कालेषु वह्नौ यदनुग्रहार्थम् ।
कर्मानुगुण्येन फलप्रदं तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २४ ॥

हेल्या ललाटस्थशुचेर्महाघ-
वनं दहन्तं तरसैव मोदात् ।
कुर्वन्तमाराम्नतचित्तशुद्धिं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २५ ॥

हेमाश्मनोः साम्यमतिं करोति
यत्पादपाथोरुहसक्तचित्तः ।
वैराग्यदानैकधुरंधरं तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २६ ॥

हालास्यगोकर्णमुखेषु दिव्य-
क्षेत्रेषु वासं कृपया करोति ।
यः पादनम्रोद्धृतये सदा तं
श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २७ ॥

हंसेन केनापि परादिनेमां
कृतां प्रयत्नादतिमोदतश्च ।
नक्षत्रमालां दधतां नराणां
कण्ठे भविष्यत्यचिरात्परासिः ॥ २८ ॥

इति श्रीदाक्षिणास्यनक्षत्रमालास्तोत्रं संपूर्णम् ॥



|| श्रीः ||

# ॥ श्रीदक्षिणामूर्तिमनुसुवर्णमालास्तवः ॥



ओमिति निखिला देवा
  यस्याज्ञां शिरसि कुर्वते सततम् ।
ओंकारपद्मभृङ्गं
  तमहं प्रणमामि दक्षिणामूर्तिम् ॥ १ ॥

नत्वा यत्पदयुग्मं
  मूका अपि वाग्विधूतगुरवः स्युः ।
नतजनरक्षणदक्षं
  तमहं प्रणमामि दक्षिणामूर्तिम् ॥ २ ॥

मोहमतङ्गजभेदन-
  पञ्चास्या यत्पदाम्बुजप्रणताः ।
मोहान्धकारमिहिरं
  तमहं प्रणमामि दक्षिणामूर्तिम् ॥ ३ ॥

भववारिधिमाशु तरे-
त्कुल्यामिव यत्पदाम्बुजध्यानात् ।
भगवत्पदादिरूपं
तमहं प्रणमामि दक्षिणामूर्तिम् ॥ ४ ॥

गतिविजितहंसगर्वं
गगनमरुद्वह्निजलधरारूपम् ।
गजमुखषडास्यपूजित-
मनिशं प्रणमामि दक्षिणामूर्तिम् ॥ ५ ॥

वरयन्तेऽखिलविद्याः
स्वयमेव यदङ्घ्रिपद्मनम्रजनान् ।
वनवासलोलचित्तं
तमहं प्रणमामि दक्षिणामूर्तिम् ॥ ६ ॥

तेन जितं जगदखिलं
तेनैवात्तं समस्तभाग्यं च ।
येन त्वत्पदयुगलं
पूजितमपि जातु दक्षिणामूर्ते ॥ ७ ॥

दमशममुखास्तु सुगुणाः
प्राप्यन्ते सत्वरं यस्य ।
पादाम्बुजयुगनमना-
त्तमहं प्रणमामि दक्षिणामूर्तिम् ॥ ८ ॥

क्षितिपतयो दासाः स्यु-
र्यत्पादपाथोजपूजकस्याशु ।
क्षितिधरशिखरावासं
तमहं प्रणमामि दक्षिणामूर्तिम् ॥ ९ ॥

णाणेति यन्मनुस्थं
वर्णं जप्तुः समस्तपुरुषार्थाः ।
करतलमध्यगताः स्यु-
स्तमहं प्रणमामि दक्षिणामूर्तिम् ॥ १० ॥

मूर्तिं निरीक्ष्य मोहं
प्राप्यागसुता पुरा तपस्तेपे ।
यस्य प्राप्त्यै सुचिरं
तमहं प्रणमामि दक्षिणामूर्तिम् ॥ ११ ॥

तस्याणिमादिसिद्धि-
विनैव योगं भवेन्न संदेहः ।
तरुणेन्दुभूषितजटं
यस्त्वां नमतीह दक्षिणामूर्ते ॥ १२ ॥

ये त्वत्पादाब्जयुगलं
चित्ते संदधति दक्षिणामूर्ते ।
तान्मत्तवारणेन्द्रा
दधति तुरंगाः सुवर्णशिबिकाश्च ॥ १३ ॥

मथितासुरसंदोहं
मानसचरमद्रिराजतनयायाः ।
मानप्रदमानमता-
मनिशं प्रणमामि दक्षिणामूर्तिम् ॥ १४ ॥

ह्यम्भोधौ लुठतां त-
त्पारं गन्तुं यदीयपदभक्तिः ।
-संसृतिरूपे नौका
तमहं प्रणमामि दक्षिणामूर्तिम् ॥ १५ ॥

मेधाप्रज्ञे चेटी-
भावं व्रजतो यदङ्घ्रिनतिकर्तुः ।
मेनासखजाकान्तं
तमहं प्रणमामि दक्षिणामूर्तिम् ॥ १६ ॥

धां वापूर्वा निखिलां
योऽरं वारयति भक्तबृन्दस्य ।
धाम्नामपि धामत्वद-
मनिशं प्रणमामि दक्षिणामूर्तिम् ॥ १७ ॥

प्रज्ञामात्रशरीरं
प्रणताघाम्भोधिकुम्भसंजातम् ।
प्रत्यक्षं नतविततेः
सततं प्रणमामि दक्षिणामूर्तिम् ॥ १८ ॥

ज्ञांशीभूताञ्जीवा-
न्भवमग्नान्ब्रह्मबोधदानेन ।
कुर्वाणं प्रविमुक्ता-
न्सततं प्रणमामि दक्षिणामूर्तिम् ॥ १९ ॥

प्रत्नवचस्ततिगेयं
प्रज्ञादानप्रचण्डनिजनमनम् ।
प्रणवप्रतिपाद्यतनुं
सततं प्रणमामि दक्षिणामूर्तिम् ॥ २० ॥

यस्यार्धवर्ष्मलाभा-
देवाभूत्सर्वमङ्गला गिरिजा ।
यमिवरहृदब्जनिलयं
तमहं प्रणमामि दक्षिणामूर्तिम् ॥ २१ ॥

छत्रीभूतवटागं
छन्नमविद्याख्यवाससानादिम् ।
छत्रादिनृपविभूतिद-
मनिशं प्रणमामि दक्षिणामूर्तिम् ॥ २२ ॥

स्वाहास्वधानिषेव्यं
स्वाकृतिसंतोषितागजाहृदयम् ।
स्वाहासहायतिलकं
सततं प्रणमामि दक्षिणामूर्तिम् ॥ २३ ॥

हासाधरीकृतविधुं
हालाहलशोभमानगलदेशम् ।
हारायिताहिराजं
सततं प्रणमामि दक्षिणामूर्तिम् ॥ २४ ॥

श्रीमन्नृसिंहयतिरा-
ट्शिष्यः श्रीसच्चिदानन्दः ।
अकरोद्गुरुवरकृपया
स्तोत्रं श्रीदक्षिणामूर्तेः ॥ २५ ॥

मनुवर्णघटितमेत-
त्स्तोत्रं यः पठति भक्तिसंयुक्तः ।
तस्मै वटतटवासी
दद्यात्सकलाः कलास्त्वरितम् ॥ २६ ॥

इति श्रीदक्षिणामूर्तिमनुसुवर्णमालास्तवः ॥



॥ श्रीः ॥

# ॥ श्रीकालभैरवपञ्चरत्नस्तुतिः ॥



खड्गं कपालं डमरुं त्रिशूलं
हस्ताम्बुजे संदधतं त्रिणेत्रम् ।
दिगम्बरं भस्मविभूषिताङ्गं
नमाम्यहं भैरवमिन्दुचूडम् ॥ १ ॥

कवित्वदं सत्वरमेव मोदा-
न्नतालये शंभुमनोऽभिरामम् ।
नमामि यानीकृतसारमेयं
भवाब्धिपारं गमयन्तमाशु ॥ २ ॥

जरादिदुःखौघविभेददक्षं
विरागिसंसेव्यपदारविन्दम् ।
नराधिपत्वप्रदमाशु नन्त्रे
सुराधिपं भैरवमानतोऽस्मि ॥ ३ ॥

शमादिसंपत्प्रदमानतेभ्यो
रमाधवाद्यर्चितपादपद्मम् ।
समाधिनिष्ठैस्तरसाधिगम्यं
नमाम्यहं भैरवमादिनाथम् ॥ ४ ॥

गिरामगम्यं मनसोऽपि दूरं
चराचरस्य प्रभवादिहेतुम् ।
कराक्षिपच्छून्यमथापि रम्यं
परावरं भैरवमानतोऽस्मि ॥ ५ ॥

इति श्रीकालभैरवपञ्चरत्नस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीकालभैरवाष्टकम् ॥



अङ्गसुन्दरत्वनिन्दिताङ्गजातवैभवं
भृङ्गसर्वगर्वहारिदेहकान्तिशोभितम् ।
मङ्गलौघदानदक्षपादपद्मसंस्मृतिं
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ १ ॥

पादनम्रमूकलोकवाक्प्रदानदीक्षितं
वेदवेद्यमीशमोदवार्धिशुभ्रदीधितिम् ।
आदरेण देवताभिरर्चिताङ्घ्रिपङ्कजं
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ २ ॥

अम्बुजाक्षमिन्दुवक्त्रमिन्दिरेशनायकं
कम्बुकण्ठमिष्टदानधूतकल्पपादपम् ।
अम्बरादिभूतरूपमम्बरायिताम्बरं
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ३ ॥

मन्दभाग्यमप्यरं सुरेन्द्रतुल्यवैभवं
सुन्दरं च कामतोऽपि संविधाय सन्ततम् ।
पालयन्तमात्मजातमादरात्पिता यथा
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ४

नम्रकष्टनाशदक्षमष्टसिद्धिदायकं
कम्रहासशोभितुण्डमच्छगण्डदर्पणम् ।
कुन्दपुष्पुमानचोरदन्तकान्तिभासुरं
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ५ ॥

काशिकादिदिव्यदेशवासलोलमानसं
पाशिवायुकिंनरेशमुख्यदिग्धवार्चितम् ।
नाशिताघबृन्दमङ्घ्रिनम्रलोकयोगदं
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ६

सारमागमस्य तुङ्गसारमेयवाहनं
दारितान्तरान्ध्यमाशु नैजमन्त्रजापिनाम् ।
पूरिताखिलेष्टमष्टमूर्तिदेहसंभवं
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ७ ॥

कालभीतिवारणं कपालपाणिशोभितं
खण्डितामरारिमिन्दुबालशोभिमस्तकम् ।
चण्डबुद्धिदानदक्षमक्षतात्मशासनं
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ८ ॥

इति श्रीकालभैरवाष्टकं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीशरवणभवदेवसेनेशषट्कम् ॥



करतलराजच्छक्त
स्वरदपराभूतकुन्दसुमगर्व ।
सुरवरनिषेविताङ्घ्रे
शरवणभव पाहि देवसेनेश ॥ १ ॥

तटिदाभदेहकान्ते
कटिविलसत्पीतवर्णकौशेय ।
पाटितशूरासुर भो
शरवणभव पाहि देवसेनेश ॥ २ ॥

नीलग्रीवतनूभव
बालदिनेशानकोटिनिभदेह ।
कालप्रतिभटमोदद
शरवणभव पाहि देवसेनेश ॥ ३ ॥

पदाजितपङ्कज पङ्कज-
    भवपङ्कजनेत्रमुख्यसुरवन्द्य ।
पदवीं प्रापय महतीं
    शरवणभव पाहि देवसेनेश ॥ ४ ॥

तारकदैत्यनिवारक
    तारापतिगर्वहारिषड्वक्त्र ।
तारक भवाम्बुराशेः
    शरवणभव पाहि देवसेनेश ॥ ५ ॥

पर्वतसुतामनोऽम्बुज-
    सद्यःसंजातवासरेशतते ।
सर्वश्रुतिगीतविभो
    शरवणभव पाहि देवसेनेश ॥ ६ ॥

**इति श्रीशरवणभवदेवसेनेशषट्कं संपूर्णम् ॥**



शिवगिरिक्षेत्रे

# ॥ श्रीगुहस्तोत्रम् ॥



पार्थक्येन हि पित्रोः
कर्तुं सेवामशक्तेषु ।
भक्तेषु किं कृपातः
पित्रोरैक्यं विभो धत्से ॥ १ ॥

शिवगिरिनिवासलोलं
हिमगिरितनयामुखाम्बुजातरविम् ।
शिरसा नमामि मनसा-
प्युरसा गुहमनिशमिष्टकल्पतरुम् ॥ २ ॥

वज्रशूलवरदाभयहस्त
वज्रधारितनयाश्रितवामम् ।
कालकालहृदयाम्बुजभानुं
नीलकण्ठवरवाहनमीडे ॥ ३ ॥

इति श्रीगुहस्तोत्रं संपूर्णम् ॥

श्रीकार्तिकेयक्षेत्रे

(तिरुच्चेन्दूरपरनामके)

## ॥ श्रीसुब्रह्मण्यभुजङ्गप्रयातस्तुतिः ॥



महेशाननाब्जार्कमर्धेन्दुफालं
महाविघ्नवाराशिकुम्भप्रभूतम् ।
महेन्द्रादिसेव्यं प्रणम्रान्तरङ्गं
महापापदाहं महेभास्यमीडे ॥ १ ॥

अपस्मारमुख्यान्क्षणाद्रोगवर्या-
न्हरन्तं नतानां निजाङ्घ्रिप्रणामात् ।
भजे सूनुमाद्यस्य वैद्यस्य शंभो-
रबोधामयस्य प्रशान्त्यर्थमारात् ॥ २ ॥

अवज्ञाय खेलां चरन्तं कुमारं
महेशं प्रणन्तुं विधिः संभ्रमेण ।
गतोऽन्तः पुनर्निष्क्रमन्येन कारा-
गृहं प्रापितस्तं भजे तारकारिम् ॥ ३ ॥

कथं चन्द्रतुल्यं मुखं ते वदामः
कलङ्केन हीनं तथा कृष्णपक्षे ।
क्षयेनापि नम्रान्तरध्वान्तभेदा-
त्ततस्तद्विशिष्टं गुहेशानसूनो ॥ ४ ॥

कदाहं निरीहो हृदम्भोजमध्ये
पयोजाभये कुक्कुटं शक्तिवर्यम् ।
करैः संदधानं सदा वीक्षमाणो
मुदं पारशून्यां भजे कार्तिकेय ॥ ५ ॥

विवेकं विरक्तिं शमादेश्च षट्कं
मुमुक्षां च संप्राप्य कृत्वा विचारम् ।
दृढं बोधमाप्स्ये कदा वेदशीर्षैः
कृपां कुर्वनाथे मयीशानसूनो ॥ ६ ॥

जनन्याः प्रसूतेः स्थलं वासभूमिः
पितुश्चेति शैलं न जह्यां कदापि ।
इतीवानतालेः प्रबोधाय शैले
वसन्तं सदा पार्वतीपुत्रमीडे ॥ ७ ॥

जनानां शयानं सदा हृद्बिले तं
भुजंगं मनःसंज्ञमारान्निहन्तुम् ।
मयूरं भुजंगस्य भोक्तारमास्ते
समारुह्य नित्यं भवाञ्छंभुसूनो ॥ ८ ॥

नतानामभीष्टानि दातुं विचित्रा-
ण्यलं शक्तिरस्तीति संबोधनाय ।
अजस्रं वहन्तं करे शक्तिमीडे
पराशक्तिपुत्रं कृपावारिराशिम् ॥ ९ ॥

निवार्याशु रोगान्समस्तान्स्वभक्ता-
न्कृपापाङ्गलेशैः सदा पालयन्तम् ।
सदारं सवाहं सभृत्यं सशिष्यं
सदा भावये षण्मुखं हृत्सरोजे ॥ १० ॥

पुरा तारकं सिंहवक्त्रं च शूरं
जघानाजिमध्ये सुराणां कृते यः ।
महेशात्मजं ह्यौरसं भक्तवश्यं
पुलिन्दात्मजास्वान्तचोरं भजेऽहम् ॥ ११ ॥

महेशस्य पञ्चाननस्याम्बिकाया
मुखानां प्रमोदं निजास्ये क्षणाद्यः ।
प्रदातुं षडास्यो बभूवैकदा तं
गुहं गन्धशैलाधिवासं भजेऽहम् ॥ १२ ॥

मुखेनाब्जभिन्दुं स्मितेन म्रदिम्ना
करस्य प्रवालं गतेनेभराजम् ।
हसन्तं हरिन्नाथसंसेविताङ्घ्रिं
सदा मानसे कुर्महे कार्तिकेयम् ॥ १३ ॥

यमाहुर्जनाः प्राकृता देहमात्मं
हृषीकाणि केचिज्जगुश्चित्तमन्ये ।
तमात्मानमानन्दसच्चित्स्वरूपं
सदा भावये पार्वतीप्रेमपात्रम् ॥ १४ ॥

यमिच्छन्ति वेत्तुं मखैर्वेदपाठै-
स्तथा दानतश्चोपवासैश्च विप्राः ।
तमत्यन्तगूढं मयूराधिरूढं
भजे नीलकण्ठस्य पुत्रं पवित्रम् ॥ १५ ॥

विबोधाख्यमुद्रायुतस्यात्मयोने-
र्वियोगो न मे जातु भूयादितीव ।
समुद्रस्य तीरे निवासं सदा यः
करोत्यादरात्तं गुहं संश्रयेऽहम् ॥ १६ ॥

सुरारिष्वजस्रं शराणां प्रमोक्षं
विधातुं शराणां वने यो बभूव ।
सुराराल्यमित्रं पुरारातिपुत्रं
सुरेन्द्रात्मजाप्राणकान्तं भजे तम् ॥ १७ ॥

विधातुं स्तुतिं ते विधीन्द्रेशमुख्या
न शक्ताः किमत्रास्ति सामर्थ्यमस्य ।
तथाप्यादराच्चित्तचाञ्चल्यतो वा
कृतं मत्प्रयत्नं सहस्वेशसूनो ॥ १८ ॥

भुजङ्गाख्यवृत्तेन क्लृप्तां स्तुतिं ये
पठन्त्यादराच्छ्रद्धया शुद्धचित्ताः ।
सुपुत्रायुरारोग्यविद्यावतस्ता-
न्कुरुष्वेशसूनो मया प्रार्थितस्त्वम् ॥ १९ ॥

इति श्रीसुब्रह्मण्यभुजङ्गप्रयातस्तुतिः संपूर्णा ॥

श्रीमयूराचलक्षेत्रे
(कुन्नक्कुड्यपरनामके)

## ॥ श्रीषण्मुखषट्पदीस्तवः ॥



मयूराचलाग्रे सदारं वसन्तं
मुदारं ददानं नतेभ्यो वरांश्च ।
दधानं कराम्भोजमध्ये च शक्तिं
सदा षण्मुखं भावये हृत्सरोजे ॥ १ ॥

गिरीशास्यवाराशिपूर्णेन्दुबिम्बं
कुरङ्गाङ्कधिक्कारिवक्त्रारविन्दम् ।
सुरेन्द्रात्मजाचित्तपाथोजभानुं
सदा षण्मुखं भावये हृत्सरोजे ॥ २ ॥

नतानां हि राज्ञां गुणानां च षण्णां
कृपाभारतो यो द्रुतं बोधनाय ।
षडास्याम्बुजातान्यगृह्णात्परं तं
सदा षण्मुखं भावये हृत्सरोजे ॥ ३ ॥

पुरा तारकं यो विजित्याजिमध्ये
सुरान्दुःखमुक्तांश्चकाराशु मोदात् ।
तमानन्दकन्दं कृपावारिराशिं
सदा षण्मुखं भावये हृत्सरोजे ॥ ४ ॥

शराणां वने जातमेनं हि बालं
यतः कृत्तिकाः पाययन्ति स्म दुग्धम् ।
ततः कार्तिकेयं वदन्तीह यं तं
सदा षण्मुखं भावये हृत्सरोजे ॥ ५ ॥

हरन्तं च बाढं तमो हार्दगाढं
गवानाद्यया चातिमोदेन लीढम् ।
सुरेन्द्रस्य पुत्र्या च गाढोपगूढं
सदा षण्मुखं भावये हृत्सरोजे ॥ ६ ॥

इयं षट्पदी यस्य वक्त्रारविन्दे
विहारं करोत्यादरान्नित्यमेव ।
षडास्यः कृपातः समस्ताश्च विद्या
वितीर्याशु तस्मै स्वभक्तिं ददाति ॥ ७ ॥

इति श्रीषण्मुखषट्पदीस्तवः संपूर्णः ॥

श्रीमयूराचलक्षेत्रे

(कुन्नक्कुड्यपरनामके)

# ॥ श्रीकार्तिकेयस्तोत्रकदम्बम् ॥



कार्तिकेय करुणामृतराशे
  कार्तिके यतद्वदा तव पूजा ।
पूर्तये भवति वाञ्छितपङ्क्तेः
  कीर्तये च रचिता मनुजेन ॥ १ ॥

अत्यन्तपापकर्मा
  मत्तुल्यो नास्ति भूतले गुह भो ।
पूरयसि यदि मदिष्टं
  चित्रं लोकस्य जायते भूरि ॥ २ ॥

कारागृहस्थितं य-
  श्चक्रे लोकेशमपि विधातारम् ।
तमनुल्लङ्घितशासन-
  मनिशं प्रणमामि षण्मुखं मोदात् ॥ ३ ॥

नाहं मन्त्रजपं ते
सेवां सपर्यां वा ।
नैसर्गिक्या कृपया
मदभीष्टं पूरयाशु तद्गुह भो ॥ ४ ॥

निखिलानपि मम मन्तू-
न्सहसे नैवात्र संशयः कश्चित् ।
यस्मात्सहमानसुत-
स्त्वमसि कृपावारिधे षडास्य विभो ॥ ५ ॥

यदि मद्वाञ्छितदाने
शक्तिर्नास्तीति षण्मुख ब्रूषे ।
तदनृतमेव स्यात्ते
वाक्यं शक्तिं दधासि यत्पाणौ ॥ ६ ॥

मयूरस्य पत्रे प्रलम्बं पदाब्जं
दधानं ककुद्येव तस्यापरं च ।
सुरेन्द्रस्य पुत्र्या च वल्ल्या च पार्श्व-
द्वयं भासयन्तं षडास्यं भजेऽहम् ॥ ७ ॥

विवेकं विरक्तिं शमादेश्च षट्कं
मुमुक्षां च दत्त्वा षडास्याशु मह्यम् ।
विचारे च बुद्धिं दृढां देहि वल्ली-
सुरेन्द्रात्मजाश्लिष्टवर्ष्मन्नमस्ते ॥ ८ ॥

सुरेशानपुत्रीपुलिन्देशकन्या-
समाश्लिष्टपार्श्वं कृपावारिराशिम् ।
मयूराचलाग्रे सदा वासशीलं
सदानन्ददं नौमि षड्वक्त्रमीशम् ॥ ९ ॥

स्वभक्तैर्महाभक्तितः पक्वदेहा-
न्समानीय दूरात्पुरा स्थापितान्यः ।
क्षणात्कुक्कुटादीन्पुनः प्राणयुक्ता-
न्करोति स्म तं भावयेऽहं षडास्यम् ॥ १०

रवजितपरपुष्टरव
स्वरधिपपुत्रीमनोऽब्जशिशुभानो ।
पुरतो भव मम शीघ्रं
पुरहरमोदाब्धिपूर्णिमाचन्द्र ॥ ११ ॥

शतमखमुखसुरपूजित
   नतमतिदानप्रचण्डपदसेव ।
श्रितजनदुःखविभेद-
   व्रतधृतकङ्कण नमोऽस्तु गुह तुभ्यम् ॥ १२ ॥

वृष्टिं प्रयच्छ षण्मुख
   मय्यपि पापे कृपां विधायाशु ।
सुकृतिषु करुणाकरणे
   का वा श्लाघा भवेत्तव भो ॥ १३ ॥

महीजलाद्यष्टतनोः पुराणां
   हरस्य पुत्र प्रणतार्तिहारिन् ।
प्रपन्नतापस्य निवारणाय
   प्रयच्छ वृष्टिं गुह षण्मुखाशु ॥ १४ ॥

पादाब्जनम्राखिलदेवताले
   सुदामसंभूषितकम्बुकण्ठ ।
सौदामनीकोटिनिभाङ्गकान्ते
   प्रयच्छ वृष्टिं गुह षण्मुखाशु ॥ १५ ॥

शिखिस्थिताभ्यां रमणीमणिभ्यां
पार्श्वस्थिताभ्यां परिसेव्यमानम् ।
स्वयं शिखिस्थं करुणासमुद्रं
सदा षडास्यं हृदि भावयेऽहम् ॥ १६ ॥

भूयाद्भूत्यै महत्यै भवतनुजननश्चूर्णितक्रौञ्चशैलो
लीलासृष्टाण्डकोटिः कमलभवमुखस्तूयमानात्मकीर्तिः ।
वल्लीदेवेन्द्रपुत्रीहृदयसरसिजप्रातरादित्यपुञ्जः
कारुण्यापारवारांनिधिरगतनयामोदवाराशिचन्द्रः ॥

इति श्रीकार्तिकेयस्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीदण्डपाणिपञ्चरत्नम् ॥



चण्डपापहरपादसेवनं
गण्डशोभिवरकुण्डलद्वयम् ।
दण्डिताखिलसुरारिमण्डलं
दण्डपाणिमनिशं विभावये ॥ १ ॥

कालकालतनुजं कृपालयं
बालचन्द्रविलसज्जटाधरम् ।
चेलधूतशिशुवासरेश्वरं
दण्डपाणिमनिशं विभावये ॥ २ ॥

तारकेशसदृशाननोज्ज्वलं
तारकारिमखिलार्थदं जवात् ।
तारकं निरवधेर्भवाम्बुधे-
र्दण्डपाणिमनिशं विभावये ॥ ३ ॥

तापहारिनिजपादसंस्तुतिं
कोपकाममुखवैरिवारकम् ।
प्रापकं निजपदस्य सत्वरं
दण्डपाणिमनिशं विभावये ॥ ४ ॥

कामनीयकविनिर्जिताङ्गजं
रामलक्ष्मणकराम्बुजार्चितम् ।
कोमलाङ्गमतिसुन्दराकृतिं
दण्डपाणिमनिशं विभावये ॥ ५ ॥

इति श्रीदण्डपाणिपञ्चरत्नं संपूर्णम् ॥



# ॥ श्रीनृसिंहभुजङ्गप्रयातस्तवः ॥



ऋतं कर्तुमेवाशु नम्रस्य वाक्यं
सभास्तम्भमध्याद्य आविर्बभूव ।
तमानम्रलोकेष्टदानप्रचण्डं
नमस्कुर्महे शैलवासं नृसिंहम् ॥ १ ॥

इनान्तर्दृगन्तश्च गाङ्गेयदेहं
सदोपासते यं नराः शुद्धचित्ताः ।
तमस्ताघमेनोनिवृत्त्यै नितान्तं
नमस्कुर्महे शैलवासं नृसिंहम् ॥ २ ॥

शिवं शैववर्या हरिं वैष्णवाग्र्याः
पराशक्तिमाहुस्तथा शक्तिभक्ताः ।
यमेवाभिधाभिः परं तं विभिन्नं
नमस्कुर्महे शैलवासं नृसिंहम् ॥ ३ ॥

कृपासागरं क्लिष्टरक्षाधुरीणं
कृपाणं महापापवृक्षौघभेदे ।
नतालीष्टवाराशिराकाशशाङ्कं
नमस्कुर्महे शैलवासं नृसिंहम् ॥ ४ ॥

जगन्नेति नेतीति वाक्यैर्निषिद्ध्या-
वशिष्टं परब्रह्मरूपं महान्तः ।
स्वरूपेण विज्ञाय मुक्ता हि यं तं
नमस्कुर्महे शैलवासं नृसिंहम् ॥ ५ ॥

नतान्भोगसक्तानपीहाशु भक्तिं
विरक्तिं च दत्वा दृढां मुक्तिकामान् ।
विधातुं करे कङ्कणं धारयन्तं
नमस्कुर्महे शैलवासं नृसिंहम् ॥ ६ ॥

नरो यन्मनोर्जापतो भक्तिभावा-
च्छरीरेण तेनैव पश्यत्यमोघाम् ।
तनुं नारसिंहस्य वक्तीति वेदो
नमस्कुर्महे शैलवासं नृसिंहम् ॥ ७ ॥

यदङ्घ्र्यब्जसेवापराणां नराणां
विरक्तिर्दृढा जायतेऽर्थेषु शीघ्रम् ।
तमङ्गप्रभाधूतपूर्णेन्दुकोटिं
नमस्कुर्महे शैलवासं नृसिंहम ॥ ८ ॥

रथाङ्गं पिनाकं वरं चाभयं यो
बिभर्ति कराब्जैः कृपावारिराशिः ।
तमिन्द्वच्छदेहं प्रसन्नास्यपद्मं
नमस्कुर्महे शैलवासं नृसिंहम् ॥ ९ ॥

पिनाकं रथाङ्गं वरं चाभयं च
प्रफुल्लाम्बुजाकारहस्तैर्दधानम् ।
फणीन्द्रातपत्रं शुचीनेन्दुनेत्रं
नमस्कुर्महे शैलवासं नृसिंहम् ॥ १० ॥

विवेकं विरक्तिं शमादेश्च षट्कं
मुमुक्षां च संप्राप्य वेदान्तजालैः ।
यतन्ते विबोधाय यस्यानिशं तं
नमस्कुर्महे शैलवासं नृसिंहम् ॥ ११ ॥

सदा नन्दिनीतीरवासैकलोलं
मुदा भक्तलोकं दृशा पालयन्तम् ।
विदामग्रगण्या नताःस्युर्यदङ्घ्रौ
नमस्कुर्महे शैलवासं नृसिंहम् ॥ १२ ॥

यदीयस्वरूपं शिखा वेदराशे-
रजस्रं मुदा सम्यगुद्घोषयन्ति ।
नलिन्यास्तटे स्वैरसंचारशीलं
चिदानन्दरूपं तमीडे नृसिंहम् ॥ १३ ॥

यमाहुर्हि देहं हृषीकाणि केचि-
त्परेऽसूंस्तथा बुद्धिशून्ये तथान्ये ।
यदज्ञानमुग्धा जना नास्तिकाख्याः
सदानन्दरूपं तमीडे नृसिंहम् ॥ १४ ॥

सदानन्दचिद्रूपमाम्नायशीर्षै-
र्विचार्यार्यवक्त्राद्यतीन्द्रा यदीयम् ।
सुखेनासते चित्तकञ्जे दधानाः
सदानन्दचिद्रूपमीडे नृसिंहम् ॥ १५ ॥

पुरा स्तम्भमध्याद्य आविर्बभूव
स्वभक्तस्य कर्तुं वचस्तथ्यमाशु ।
तमानन्दकारुण्यपूर्णान्तरङ्गं
बुधा भावयुक्ता भजध्वं नृसिंहम् ॥ १६ ॥

पुरा शंकरार्या धराधीशभृत्यै-
र्विनिक्षिप्तवह्निप्रतप्तस्वदेहाः ।
स्तुवन्ति स्म यं दाहशान्त्यै जवात्तं
बुधा भावयुक्ता भजध्वं नृसिंहम् ॥ १७ ॥

सदेमानि भक्त्याख्यसूत्रेण दब्धा-
न्यमोघानि रत्नानि कण्ठे जना ये ।
धरिष्यन्ति तान्मुक्तिकान्ता वृणीते
सखीभिर्वृता शान्तिदान्त्यादिमाभिः ॥ १८ ॥

इति श्रीनृसिंहभुजङ्गप्रयातस्तवः संपूर्णः ॥



॥ श्रीः

# ॥ श्रीनृसिंहसप्तकम् ॥



अद्वैतवास्तवमतेः प्रणमज्जनानां
संपादनाय धृतमानवसिंहरूपम् ।
प्रह्लादपोषणरतं प्रणतैकवश्यं
देवं मुदा कमपि नौमि कृपासमुद्रम् ॥ १ ॥

नतजनवचनर्तत्व-
प्रकाशकालस्य दैर्घ्यमसहिष्णुः ।
आविर्बभूव तरसा
यः स्तम्भान्नौमि तं महाविष्णुम् ॥ २ ॥

वक्षोविदारणं य-
श्चक्रे हार्दं तमो हन्तुम् ।
शत्रोरपि करुणाब्धि
नरहरिवपुषं नमामि तं विष्णुम् ॥ ३ ॥

रिपुहृदयस्थितराजस-
   गुणमेवासृङ्मिषेण करजाग्रैः ।
धत्ते यस्तं वन्दे
   प्रह्लादपूर्वभाग्यनिचयमहम् ॥ ४ ॥

प्रह्लादं प्रणमज्जन-
   पङ्क्तेः कुर्वन्ति दिविषदो ह्यन्ये ।
प्रह्लादप्रह्लादं
   चित्रं कुरुते नमामि यस्तमहम ॥ ५ ॥

शरदिन्दुकुन्द धवलं
   करजप्रविदारितासुराधीशम् ।
चरणाम्बुजरतवाक्यं
   तरसैव ऋतं प्रकुर्वदहमीडे ॥ ६ ॥

मुखेन रौद्रो वपुषा च सौम्यः
   सन्कंचनार्थं प्रकटीकरोषि ।
भयस्य कर्ता भयहृत्त्वमेवे-
   त्याख्याप्रसिद्धिर्यदसंशयाभूत् ॥ ७ ॥

इति श्रीनृसिंहसप्तकं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ श्रीनृसिंहहयग्रीवस्तवः ॥



आकण्ठमर्त्यरूपौ
तत्पश्चात्सिंहतुरगरूपधरौ ।
देवौ कौचित्प्रज्ञा-
मन्यालभ्यां प्रयच्छतां मह्यम् ॥ १ ॥

अद्वैतवास्तवमति
कलयितुमेवाश्रिनम्रलोकतते: ।
स्वीकृतनृसिंहनरहय-
रूपौ देवौ हृदम्बुजे जयताम् ॥ २ ॥

इति श्रीनृसिंहहयग्रीवस्तवः संपूर्णः ॥



श्रीरङ्गक्षेत्रे

# ॥ श्रीरङ्गनाथस्तवः ॥



क्षीराम्भोधिलसत्फणीन्द्रफलके कामं सदा शायिनी
किं चाम्भोजभवस्य भीतिहतये घ्नन्ती मधुं कैटभम् ।
लक्ष्म्युत्सङ्गलसत्पदाम्बुजयुगी कारुण्यवारांनिधि-
मुद्रा काचन मुक्तिदानकुशला निद्राति जागर्ति वा ॥

इति श्रीरङ्गनाथस्तवः संपूर्णः ॥



श्रीभूवराहक्षेत्रे

# ॥ श्रीभूवराहस्तुतिः ॥



जायते वरमहः पदपद्म-
प्रेक्षणेन तव नम्रजनानाम् ।
भूवराहकरुणामृतराशे
त्वां वराह इति तत्कथयन्ति ॥ १ ॥

राजराजपरिपूजितपाद
प्राणनाथ सरिदीश्वरपुत्र्याः ।
श्रीवराहपुरसंस्थितलोका-
न्भूवराह परिपाहि कृपाब्धे ॥ २ ॥

इति श्रीभूवराहस्तुतिः संपूर्णा ॥



श्रीकालटिक्षेत्रे

# ॥ श्रीकृष्णषट्कम् ॥



भगवत्पदकरपङ्कज-
पूजितपदपद्म शङ्खचक्रधर ।
यदुनन्दन नतनन्दन
पाहि सदा मां कृपापयोराशे ॥ १ ॥

नवनीतादप्यधिकं
मृदु मम हृदयं प्रणम्ररक्षायाम् ।
इति बोधयितुं धत्से
नवनीतं किं करे कृष्ण ॥ २ ॥

गोगोपमुक्तिदं त्वां
गोभारहरं कृपापयोराशिम् ।
गोपीजनार्चितपदं
गोप्राप्त्यै नौमि देवकीसूनुम् ॥ ३ ॥

गोवर्धनमन्दरधर-
धरणाद्गर्वायसे वृथा शौरे ।
यद्यस्ति शक्तिरधुना
धर मां धरणीरमार्चिताङ्घ्रियुग ॥ ४ ॥

अल्पबलकैटभादी-
न्हत्वा गर्वं वृथा कुरुषे ।
मोहाभिधानमसुरं
जहि शीघ्रं शक्तिरस्ति यदि कृष्ण ॥ ५ ॥

शंकरगुरुवरकरवर-
कमलार्चिताङ्घ्रियुग कृष्ण ।
किङ्करवरजनबृन्दं
तोषय तोयालिशयनकमलेश ॥ ६ ॥

इति श्रीकृष्णषट्कं संपूर्णम् ॥



श्रीमदनन्तशयनक्षेत्रे

# ॥ श्रीपद्मनाभस्तोत्रम् ॥



पद्मनाभ करुणामृतराशे
  सद्म हेतुलवशून्यकृपायाः
छद्महारितमहाबलिसंप-
  द्विद्म एव तव वीर्यमनन्तम् ॥ १ ॥

नाभ्याः सरस्त्वेन हि वर्णनं तु
  सत्यं तदा स्यात्किल पद्मनाभ ।
यदा.त्वदीयां विषयीकरोति
  नाभिं न चेद्याति कथं प्रमात्वम् ॥ २ ॥

नाभीपद्मे पुत्रं
  वक्षसि कान्तां च संदधत्तान्तः ।
स्वपिषि सदा किं विष्णो
  नम्रायास्मै द्रुतं ब्रूहि ॥ ३ ॥

पापाब्धौ बडबानलस्य हि शिखा जाड्यान्धकारे रवि-
भाग्याब्धौ शरदिन्दुपङ्क्तिरमला त्वन्नामसंकीर्तनम् ।
भक्तानां परिपोषणे च जननी स्वात्मात्रबोधे पिता
कस्तस्माद्विमुखो भवेद्भुवि नरो नो चेन्महापापभाक् ॥

क्षीराम्भोनिधिराजमानफणिराण्मध्ये शयाना सदा
लक्ष्मीपाणिपयोजमर्दितपदा कारुण्यवारांनिधिः ।
कुर्वाणा मधुना च कैटभयुजा युद्धं च दोर्भ्यां मुहु-
र्मुद्रा काचन मुक्तिदानकुशला निद्राति जागर्ति वा ॥

पद्मनाभ तव पादसरोजा-
सक्तचित्तमवनीपतिमेनम् ।
पाहि साश्रितसबन्धुसविद्व-
ल्लोकमादरभरेण सराष्ट्रम् ॥ ६ ॥

सामोदं प्रदिशन्तु वञ्चिकुलभूमूलर्क्षराजाय वा-
ग्देवीचन्द्रकलाधरेभवदनाः कारुण्यवाराशयः ।
दीर्घायुर्दृढगात्रतामलयशांस्याचन्द्रतिग्मांशुभं
धर्माध्वन्यधिकां प्रवृत्तिमचलामच्छिन्नसत्सन्ततिम् ॥

पायासुर्जगदम्बिकेन्दुविलसच्छीर्षेभवक्त्राः सदा
राज्यौ केरलदेशभाग्यलतिके कारुण्ययुग्भिर्मुदा ।
दृग्भिः पादविनम्रसौख्यविततैः संपादिकाभिर्जवा-
द्दत्त्वा सन्ततिमाशु सद्गुणयुतामारोग्यदीर्घायुषी ॥ ८ ॥

मोचितः किं गजाधीशः
पद्मनाभेन सत्वरम् ।
दृढभावनया तस्य
पद्मनाभोऽभवद्व्रजेट् ॥ ९ ॥

श्रीभूमिपाणिसरसीरुहसेविताङ्घ्रे
श्रीवत्सकौस्तुभधर प्रणतार्तिहारिन् ।
श्रीकण्ठमित्र दिननाथसुधांशुनेत्र
श्रीपद्मनाभ मम देहि पदावलम्बम् ॥ १० ॥

नागेन्द्र भोगशयन प्रणतालिवाञ्छा-
संपूरणामरतरो विधियोनिनाभे ।
नाकाधिपादिपरिपूजितपादपद्म
श्रीपद्मनाभ मम देहि पदावलम्बम् ॥ ११ ॥

कमलाकरपद्मपूजित
करुणादुग्धपयोधिमध्यगम् ।
भुजगाधिप भोगशायिनं
कलये कंचन देवसत्तमम् ॥ १२ ॥

इति श्रीपद्मनाभस्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीदत्तात्रेयस्तवः ॥



दत्तात्रेयपदाब्जं
    वित्ताधीशाधिदेववर्येड्यम् ।
हृत्तापहारचतुरं
    चित्तामलभावसिद्ध्ये नौमि ॥ १ ॥

अनसूयासुतमीडे
    वनसंचारप्रसक्तचेतस्कम् ।
कनकप्रदाननिरतं
    वनमालाभूषितग्रीवम् ॥ २ ॥

अविमुक्तस्नानरतं
    कोह्लापुरमध्यमन्त्रजपशीलम् ।
सह्याद्रिशयनलोलं
    माधूकरभैक्ष्यभोजनं वन्दे ॥ ३ ॥

आशाम्बरं प्रपद्ये
पाशापहमाशु पादनम्राणाम् ।
केशावधूतसूर्य
काशाप्रचलन्मनोनिरोधाय ॥ ४ ॥

औदुम्बरतरुमूले
कृतवासं कृष्णभक्तिदानरतम् ।
औदुम्बरादिदिव्य-
क्षेत्रावासं नमामि योगीशम् ॥ ५ ॥

शरदिन्दुतुल्यवदनं
कर्राजद्बोधमुद्रमतिसुलभम् ।
तरणाय भवपयोधेः
शरणं यास्यामि दत्तयोगीन्द्रम् ॥ ६ ॥

कृतवीर्यपुत्रदेशिक-
मिन्दुप्रतिमानवदनकञ्जातम् ।
बिम्बाधरमनसूया-
मुखपद्मार्कं नमामि गुरुदत्तम् ॥ ७ ॥

कृत्ताघबृन्द नमतां
चित्ताम्बुजमध्यसंस्थ भक्तानाम् ।
दत्तात्रेय कृपाब्धे
यत्ताक्षाराध्यचरण मां पाहि ॥ ८ ॥

क्रव्यादवैरिरूपो
नव्याम्बुदसंनिकाशदेहरुचिः ।
भव्याय भवतु योगी
निर्व्याजदयासुधाम्बुधिः कोऽपि ॥ ९ ॥

गतिविजितमत्तनागं
मतिदानधुरंधरं प्रणम्रेभ्यः ।
यतिततिपूजितपादं
पतितावनदीक्षमेनमाकलये ॥ १० ॥

गोरक्षकमुखयोगिभि-
रादरतः सेव्यमानपदपद्मम् ।
गोब्राह्मणहितकारण-
मत्रेः सुतमातनोमि हृत्पद्मे ॥ ११ ॥

घुटिकाञ्जनमुखसिद्धी-
घटिकातः प्राप्नुवन्ति यद्भक्ताः ।
स्फटिकाक्षमालिकाढ्यं
तटिदाभं नौमि तं दत्तम् ॥ १२ ॥

दिननाथतुल्यवसनं
दिष्ट्यैकप्राप्यचरणपाथोजम् ।
दिवि भुवि पाताले च
प्रचरन्तं नौमि योगिनं कंचित् ॥ १३ ॥

बालोन्मत्तसदृक्षं
कालोत्पन्नाशनेन संतुष्टम् ।
मालोल्लसद्गलतटं
कालोच्छित्त्यै नमामि दत्तमुनिम् ॥ १४ ॥

भरताग्रजभक्ताभ्यं
भद्राणि दिशन्तमाशु नम्रेभ्यः ।
भवभीतिभञ्जनचणं
दत्तात्रेयं नमामि मोदेन ॥ १५ ॥

भवनीकृतानतहृदं
   भक्ताज्ञानेभदलनपञ्चास्यम् ।
भसितावलिप्तगात्रं
   भव्यकरं नौमि दत्तमुनिवर्यम् ॥ १६ ॥

यस्याष्टविधा मन्त्राः
   शीघ्रं सिद्धिप्रदायकास्तिष्ये ।
तस्याङ्घ्रिपङ्कजमहं
   दत्तात्रेयस्य नौमि योगीशः ॥ १७ ॥

यागादिकर्मलभ्यं
   भोगालिं नम्रपङ्क्तये ददतम् ।
योगाधिरूढमनिशं
   नागाधिपशायिनं नमस्यामि ॥ १८ ॥

रवधूतहंसगर्वं
   नवनवकविताप्रदानधौरेयम् ।
विधिहरिशिवस्वरूपं
   प्रवणं वन्दे नतावने कंचित् ॥ १९ ॥

वैराग्यदाननिरतं
तीरातिक्रान्तवैभवोपेतम् ।
काराबन्धविमोचक-
मैरावतयायिसेवितं नौमि ॥ २० ॥

शरणागतपरिरक्षण-
निरतं तरुणं तमालसमदेहम् ।
सरसिजसदृक्षनयनं
शरणं यास्यामि दत्तमुनिनाथम् ॥ २१ ॥

कथितागमार्थसारं
मथिताखिलदुःखकारणाविद्यम् ।
पथि परमे स्थितमनिशं
शिथिलितपापौघमाश्रये दत्तम् ॥ २२ ॥

शीर्षत्रयेण सहितं
शीर्षे वेदत्रयस्य नतलोकान् ।
संबोधयन्तमनिशं
भावयतु स्वान्तमादराद्यमिनम् ॥ २३ ॥

स्मृतिमात्रतुष्टहृदयं
मतिदं तरसाङ्घ्रिनम्रलोकाय ।
शितिकण्ठमित्रमीडे
कृतिनां प्रत्यक्षमन्वहं दत्तम् ॥ २४ ॥

गोरक्षाद्यैर्मुख्यसुशिष्यैः परिवीतं
गोविप्राणां पोषणसक्तं करुणाब्धिम् ।
गोलक्ष्मीशाम्बुजभवगिरिजासस्वरूपं
दत्तात्रेयश्रीपदपद्मं प्रणतोऽस्मि ॥ २५ ॥

इति श्रीदत्तात्रेयस्तवः संपूर्णः ॥



॥ श्रीः ॥

# ॥ श्रीहनूमच्चतुर्विंशतिः ॥



यो बाल्येऽपि दिनेशं
प्रोद्यन्तं पक्वदिव्यफलबुद्ध्या ।
न्युदपतदाशु हि पुष्कर-
मादातुं नौमि तं समीरसुतम् ॥ १ ॥

यस्मै भगवान्ब्रह्मा
प्रायच्छद्वायुतृप्तये पूर्वम् ।
विविधान्वरान्वरांस्तं
वन्दे दुर्ज्ञेयदिव्यमहिमानम् ॥ २ ॥

सुरसावदनं विपुलं
तरसा गत्वा विनिर्गतं दृष्ट्वा ।
यं सुरनिकरा विस्मय-
माजग्मुर्नौमि तं महाप्राज्ञम् ॥ ३ ॥

लङ्कापुराधिदैवत-
गर्वं वेगाच्चपेटिकादानात् ।
निर्मूलं यश्चक्रे
वन्दे तं वायुसूनुममितबलम् ॥ ४ ॥

गोष्पदवत्सरितांनिधि-
मुल्लङ्घयाशोकविपिनगां सीताम् ।
अद्राक्षीद्भयरहितो
यस्तं प्रणमामि शिंशुपामूले ॥ ५ ॥

रामादेशश्रवणा-
नन्दादुद्धूतशोकगन्धां यः ।
सीतां चक्रे मतिमां-
स्तमहं प्रणमामि शोकविच्छित्यै ॥ ६ ॥

योऽक्षकुमारप्रमुखा-
न्प्रवरान्दनुजाञ्जघान कुतुकेन ।
एकः सहायरहित-
स्तमहं प्रणमामि गन्धवहसूनुम् ॥ ७ ॥

प्राप्य मणिं सीतायाः
  काननमसुरस्य सत्वरं भङ्क्त्वा ।
दग्ध्वा लङ्कां योऽगा-
  द्रघुवरनिकटं स मामवतु ॥ ८ ॥

सीताप्रोदितवचना-
  न्यशेषतो यो निवेद्य रघुवीरम् ।
चक्रे चिन्तारहितं
  वन्दे तं चिन्तितार्थदं नमताम् ॥ ९ ॥

समरे वक्षसि येन
  प्रहतः संमूर्छितः ससंज्ञोऽथ ।
प्रशशंस रावणो यं
  तमतिबलानन्दवर्धनं नौमि ॥ १० ॥

ओषधिगिरिमतिवेगा-
  द्गत्वानीय प्रवृद्धदिव्यतनुः ।
यो लक्ष्मणासुदानं
  चक्रे तं नौमि गरुडनिभवेगम् ॥ ११ ॥

रघुपतिमुखारविन्द-
स्रवदागमशीर्षतत्त्वमकरन्दम् ।
आपीयागलमनिशं
नन्दन्तं नौमि पवनमूलधनम् ॥ १२ ॥

कनकाद्रिसदृशकायं
कनकप्रदमाशु नम्रजनपङ्क्तेः ।
रक्ताम्बुजास्यमीडे
सक्तान्तःकरणमिनकुलोत्तंसे ॥ १३ ॥

कारुण्यजन्मभूमिं
काकुत्स्थाङ्घ्र्यब्जपूजनासक्तम् ।
काळाहितभयरहितं
कामविदूरं नमामि कपिमुख्यम् ॥ १४ ॥

कुण्डलभासिकपोलं
मण्डलमङ्घ्रिप्रणम्रजन्तूनाम् ।
कुर्वन्तमीप्सितार्थैः
सर्वैर्युक्तं भजेऽञ्जनासूनुम् ॥ १५ ॥

नयनजितहेमगर्वं
नयनयपारीणमञ्जनातनयम् ।
गतिविजितजनककीर्तिं
मतिमतिनिशितां ददानमहमीडे ॥ १६ ॥

पुरतो भव करुणाब्धे
भरताग्रचरणलग्नचित्ताब्ज ।
हर मम निखिलां चिन्तां
करजितपाथोज कलितवटुरूप ॥ १७ ॥

रविसुतमन्त्रिवरेण्यं
पविताडनसहनदक्षदिव्यहनुम् ।
कविशिष्यहरणचतुरं
सवितृविनेयं नमामि वातसुतम् ॥ १८ ॥

वक्षस्ताडितशैलं
रक्षःपतिसैन्यमर्दनप्रवणम् ।
रक्षाकरं नमस्या-
म्यक्षाधिपदूतमनिलपुण्यचयम् ॥ १९ ॥

सुरदेशिकसदृशगिरं
करजैर्हरिस्य कठिनतागर्वम् ।
नरशृङ्गतां नयन्तं
नरमनिशं नौमि वाद्यमनिलसुतम् ॥ २० ॥

श्रीपारिजातपादप-
मूले वासं करोषि किं हनुमन् ।
अध्येतुमवनताखिल-
वाञ्छितदातृत्वमवनिजेड्दूत ॥ २१ ॥

पुरदग्धारं मनसिज-
जेतारं भक्तमन्तुसहनचणम् ।
त्वामीशानं के वा
न ब्रुवते ब्रूहि वायुसूनो मे ॥ २२ ॥

पुरदग्धारं मनसिज-
जेतारं रामनामरुचिविज्ञम् ।
हनुमन्भवन्तमीशं
वदति न कः प्रणतसर्वदोषसहम् ॥ २३ ॥

सहमानापरमूर्ते
  सह माननान्मम मन्तून् ।
पवमानपुण्यराश
  प्लवमानाब्धौ नमामि तव चरणौ ॥ २४ ॥

इति श्रीहनूमच्चतुर्विंशतिः संपूर्णा ॥



॥ श्रीः ॥

श्रीशंकरनारायणक्षेत्रे

# ॥ श्रीहरिहरस्तुतिः ॥



शिव वासुदेव शंकर
  विश्वंभर पार्वतीश कमलेश ।
मृत्युंजय मुरलीधर
  मृड केशव हर रमेश मां पाहि ॥ १ ॥

इति श्रीहरिहरस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

श्रीकालटिक्षेत्रे

# ॥ श्रीशास्तृस्तोत्रम् ॥



शास्ता दुष्टजनानां
पाता पादाब्जनम्रलोकानाम् ।
कर्ता समस्तजगता-
मास्तां मद्धृदयपङ्कजे नित्यम् ॥ १ ॥

गणपो न हरेस्तुष्टिं
प्रद्युम्नो नैव दास्यति हरस्य ।
त्वं तूभयोश्च तुष्टिं
ददासि तत्ते गरीयस्त्वम् ॥ २ ॥

इति श्रीशास्तृस्तोत्रं संपूर्णम् ॥



श्रीशृङ्गगिरिनिकटस्थ

श्रीसूर्यनारायणदेवस्थाने

# ॥ श्रीदिनेशस्तवः ॥



मानससरोगतं मे
    शोषय पङ्कं खरोस्र दिननाथ ।
नो चेत्खरत्वमेषा-
    मुस्राणां भूयात्कथं ब्रूहि ॥ १ ॥

निवार्य बाह्यं परमन्धकारं
    दिनेश गर्वं कुरुषे वृथा त्वम् ।
यद्यस्ति शक्तिस्तव मामकीन-
    मन्तःस्थमान्ध्यं विनिवारयाशु ॥ २ ॥

इति श्रीदिनेशस्तवः संपूर्णः ॥



॥ श्रीः ॥

# ॥ श्रीप्राचीनपापनाशक्षेत्रस्तुतिः ॥



अधुनातनपापाना-
    मदृढत्वान्नाशनं भवत्येव ।
इतरेभ्यस्तीर्थेभ्यः
    प्राचीनानां तु रूढमूलानाम् ॥ १ ॥

पापानां हि विनाशन-
    मस्मादेव प्रजायते तस्मात् ।
प्राचीनपापनाशन-
    मित्याख्याजायतास्य तीर्थस्य ॥ २ ॥

यद्वद्रोगस्याल्पकालप्रवृत्त-
    स्याराद्भूयान्नाशनं भेषजेन ।
सामान्येन प्रायशो हीह लोके
    नैवानल्पात्कालतः संचितस्य ॥ ३ ॥

इति श्रीप्राचीनपापनाशक्षेत्रस्तुतिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्रीकालटिक्षेत्रस्तोत्रम् ॥



अद्राक्षं गुरुवर्यजन्मधरणिं कालट्यभिख्यां महा-
मोहध्वान्तनिवारणैकतरणिं संसारसिन्धोर्दृढाम् ।
नौकां काममुखारिषट्कविपिने दावायमानां मुहु-
र्वैराग्यादिसुसस्यपोषणविधौ कादम्बिनीं कामपि ॥

अद्राक्षं यत्र पूर्णा प्रवहति सततं शैत्यमाधुर्यराज-
त्तोया स्वार्णोनिमज्जज्जनततिदुरितौघाशुविध्वंसदक्षा ।
यत्रार्येशावतारो जगदुपकृतये पूर्वमासीद्धरां तां
कालट्याख्यां वहन्तीं बहुजनिरचितापारपुण्याप्यवीक्षाम् ॥

इति श्रीकालटिक्षेत्रस्तोत्रं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीखण्डखण्डषट्पदी ॥



श्रीखण्डखण्डः प्रतिभाति शिल्पि-
वरेण चित्रीकृतसर्वगात्रः ।
लताविकारैरपि पक्षिशाखा-
मृगैश्च सुग्रीवपुरीव रम्या ॥ १ ॥

कीशावृतत्वेन विभासमानः
श्रीखण्डखण्डः कृतचित्रशिल्पः ।
विभाति मच्चेतसि नूनमद्य
लङ्केव शाखामृगसंनिरुद्धा ॥ २ ॥

वस्त्वेकमेव प्रतिभाति नाने-
त्यारम्भणादिश्रुतिसिद्धमर्थम् ।
श्रीखण्डखण्डः परिदृश्यमानो
लतामृगाकारतया व्यनक्ति ॥ ३ ।

शाखामृगाकारतया विभान्ती
चातुर्यतः शिल्पिवरस्य नूनम् ।
श्रीखण्डवृक्षस्य विचित्रमेत-
त्कीशस्य शाखामृगतां व्यनक्ति ॥ ४ ॥

श्रीखण्डखण्डोऽपि मुदं तनोति
किं श्रीसमस्तैक्यविबोधमेषः ।
समीक्षकाय प्रतनोति नूनं
श्रीखण्डखण्डो बहुचित्रशिल्पः ॥ ५ ॥

श्रीखण्डखण्डोऽन्तररूप एव
बहिश्च नानाविधरूपभाक्च ।
विचार्यमाणोत्तरसारबुद्धिं
बाह्येषु भावेषु तनोति शीघ्रम् ॥ ६ ॥

आकंण्ठमापीय मरन्दबृन्दं
विनिर्गता मद्वदनाब्जमध्यात् ।
श्रीखण्डखण्डस्य गृहीतुकामा
नूनं सुगन्धं वरषट्पदीयम् ॥ ७ ॥

इति श्रीखण्डखण्डषट्पदी संपूर्णा ॥



॥ श्रीः ॥

श्रीजगद्गुरुश्रीनरसिंहभारतीविषयकः

# ॥ श्रीशारदास्तवः ॥



लीला नाम महीपतेस्तु महिषी स्वाङ्गेऽपि दग्धे यथा-
पूर्वं त्वत्करुणाकटाक्षवशतः पूर्वं समागाद्यथा ।
तद्वच्छ्रीनरसिंहभारतिगुरुर्मद्भाग्यपुञ्जः कदा
वाण्यायास्यति सत्वरं वद तथा कुर्याः प्रसादं मयि ॥

मृताश्च पुनरुत्थिताः कपिवरा यथा शारदे
रघूत्तमकृपावशादपि यथापुरं संगताः ।
तथा मम यथापुरं कलितदिव्यभव्याकृति-
र्नृसिंहगुरुरादराद्द्रुततरं समागच्छतु ॥ २ ॥

इति श्रीशारदास्तवः संपूर्णः ॥



॥ श्रीः ॥

# ॥ शिष्याशीर्वचनात्मकस्तवाः ॥



## श्रीरत्नगर्भहेरम्बस्तवः ॥

साधयतु कार्यजालं
तावकमाशु प्रणम्रजनवरदः ।
रत्नव्रजलसदुदरो
गणनाथो हेतुशून्यकरुणाब्धिः ॥ १ ॥

 

## श्रीशारदास्तवः ॥

तिष्येऽपि काले श्रुतिशीर्षमार्ग-
प्रवर्तनाय श्रुतिशीर्षगेया ।
या शारदा शंकरपूजिताभू-
त्साव्यात्सभां तत्परिपालकांश्च ॥ १ ॥

 

श्रीरामलक्ष्मणाविव
सौहार्दं प्राप्य सुस्थिरं सुचिरम् ।
श्रीचामराजपुत्रौ
जीयास्तां शारदाम्ब तव कृपया ॥ १ ॥

भारति संपद्भरितौ
बुद्ध्या चैवातितीक्ष्णया पूर्णौ ।
आयुष्मन्तौ सुखिनौ
भूयास्तां चामराजसुकुमारौ ॥ २ ॥

राज्याभिवृद्धिमतुलां
प्रापय्याश्वेभपत्तिवृद्धिं च ।
पालय कमलजजाये
चामक्षितिपालवर्यसुकुमारौ ॥ ३ ॥

गजतुरगवाहनस्था-
वपि रथमध्येषु सुस्थितौ वाणि ।
संरक्ष सन्ततं बहु-
करुणे श्रीचामराजसुकुमारौ ॥ ४ ॥

देवद्विजगुरुभक्तिं
सुदृढां दत्त्वा च विनयसंपत्तिम् ।
पालय पद्मजमानिनि
सततं श्रीचामराजसुकुमारौ ॥ ५ ॥

गिरिसानुषु गहनेष्वपि
मार्गेष्वनिशं समस्तदेशेषु ।
सर्वापद्भ्यः पालय
विधिभामिनि चामराजसुकुमारौ ॥ ६ ॥

वाक्पाटवमतिदृढतां
नीरोगत्वं च वपुषि सुयशश्च ।
दत्त्वाब्जयोनिजाये
कारुण्यात्पाहि चामनृपपुत्रौ ॥ ७ ॥

वश्यान्विधाय नृपती-
न्दत्त्वा चैकातपत्रसाम्राज्यम् ।
श्रीचक्रकृतनिवासे
वाण्यव चामावनीपसुकुमारौ ॥ ८ ॥

श्रीनाथमुखनिषेव्ये
श्रीविद्यादानदक्षपदविनुते ।
श्रीशारदाम्ब पाहि
श्रीमन्तौ चामराजसुकुमारौ ॥ ९ ॥

वाणि तावकविलाससमुत्थौ
पाणिनिर्जितपयोरुहगर्वौ ।
सामवेदनुतदिव्यचरित्रे
चामभूपतनयौ परिपाहि ॥ १० ॥

यद्यस्ति मयि कृपा तव
विनुता स्तुत्यानया गिरां देवि ।
शिष्याविमौ मदीयौ
पाहि श्रीचामराजसुकुमारौ ॥ ११ ॥

 

## श्रीकण्ठेशस्तुतिः ॥

श्रीशाम्भोजभवादिमामरगणप्रस्तूयमानागजा-
चित्ताम्भोरुहबालवासरपते कारुण्यवारांनिधे ।

श्रीविद्याप्रदपादपङ्कजसक्तप्राणम्रलोकालये
श्रीकण्ठेश महाप्रभोऽव ससुतं श्रीचामराजप्रभुम् ॥

पापाम्भोनिधिबाडब प्रविलसज्ज्योत्स्नाभदेहच्छवे
कालाहंकृतिवारणव्रतविधिप्रावीण्यभाक्शंकर ।
प्राणायामपरायणैर्मुनिवरैः संचिन्त्यमूर्तेऽनिशं
श्रीकण्ठेश महाप्रभोऽत्र ससुतं श्रीचामराजप्रभुम् ॥

श्रीमच्छंकरदेशिकेन्द्ररचितव्याख्यानसिंहासना-
धीशश्रीनरसिंहभारतिकराम्भोजार्चिताङ्घ्रिद्वय ।
श्रीवाणीपरिसेविताागतनयासंशोभिताङ्कस्थल
श्रीकण्ठेश महाप्रभोऽव ससुतं श्रीचामराजप्रभुम् ॥

हस्त्यश्वादिसमस्तमङ्गनिवहं प्रापय्य वृद्धिं परां
हस्तीन्द्राननकार्तिकेयविलसत्पार्श्वद्वय प्रेमतः ।
दारामात्यसुमित्रबन्धुसहितं श्रीकृष्णराजात्मजं
श्रीकण्ठेश महाप्रभोऽव ससुतं श्रीचामराजप्रभुम् ॥

विद्यावृद्धिकृते सभा बहुविधा निर्माय तत्राग्रिमं
दत्त्वा वेतनमादरात्सुविदुषः संस्थाप्य देशे स्वके ।

अध्येतॄन्परिपोषयन्तमनिशं दत्त्वाशनाच्छादने
श्रीकण्ठेश महाप्रभोऽव ससुतं श्रीचामराजप्रभुम् ॥

गौरीनाथरमाधवाङ्घ्रिसरसीसंजातभृङ्गायित-
स्वान्तं मन्मथगर्वहारिवपुषं कारुण्यरत्नाकरम् ।
देवब्राह्मणभक्तिजन्मसदनं वाणीविलासाश्रयं
श्रीकण्ठेश महाप्रभोऽव ससुतं श्रीचामराजप्रभुम् ॥

 

## श्रीगौरीशस्तुतिः ॥

बालं चाममहीमहेन्द्रसुकृतक्षीराब्धिमध्योद्भवं
सोमं सोमशिशूत्तमाङ्ग सततं मौलौ निधायादरात् ।
श्रीमत्कृष्णमहीपसंज्ञमनिशं सिंहासनाध्यासिनं
विद्यायुर्धननीतिभिः प्रतिपदं गौरीश संवर्धय ॥ १ ।

जित्वा मृत्युमथापमृत्युमखिलान्रोगांश्च हत्वानिशं
प्राणत्राखिललोकरक्षणविधावाबद्धदीक्ष प्रभो ।
श्रीमत्कृष्णमहीपतिं ससहजं सिंहासनाध्यासिनं
मार्कण्डेयमिवादरेण सततं गौरीश संवर्धय ॥ २ ॥



॥ श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः ॥

शौर्यौदार्यमुखान्गुणाननितरप्राप्यान्ददत्सर्वदा
प्रालेयाचलसेतुमध्यविलसद्भूपालवर्येड्यताम् ।
दीर्घायुष्यमरोगतामपि ददच्छ्रीकृष्णभूपोत्तमं
मात्राद्यैः सततं कृपाजलनिधे गौरीश संवर्धय ॥ ३ ॥

सेनाधीशसुमन्त्रिभृत्यसहितं नव्योपमन्युं प्रभो
कृत्वा दीनजनावनैकनिपुणं कारुण्यवारांनिधे ।
बालं कृष्णमहीपसंज्ञमनिशं दत्त्वा च भक्तिं स्थिरां
हर्यक्षासनसंस्थितं ससहजं गौरीश संवर्धय ॥ ४ ॥

 

## श्रीशिवास्तुतिः ॥

कालाहंकारनिर्वापणचणहृदयाम्भोजबालारुणाभे
कायक्लेशादिहीनैरपि सुखसुलभैः सेवनैः प्रीयमाणे ।
काणादाक्षाङ्घ्रिशेषप्रमुखबुधवरैश्चिन्त्यमानाङ्घ्रिपद्मे
सर्वज्ञं श्रीनृसिंहं कुरु शिवदयिते सत्वरं मद्विनम्रम् ॥

यत्पादाम्भःप्रभूतप्रणतिरतिजवात्कर्तुमीष्टे जगत्यां
कादाचित्कापि मूकं सुरगुरुजयिनं वाग्भिरन्यादृशाभिः

सा त्वं वेलाविहीनप्रसृमरकरुणापूरपूर्णैः कटाक्षैः
सर्वज्ञं श्रीनृसिंहं कुरु शिवदयिते सत्वरं मद्विनम्रम् ॥२॥

यां बोद्धुं शान्तिदान्तिप्रमुखगुणवरैः संयतन्ते यतीन्द्राः
यस्याः कारुण्यलेशाज्जगति जनततिर्जन्ममृत्यू जहाति ।
सा त्वं सच्चित्स्वरूपा शुकमुखमुनिभिश्चिन्त्यमाना नितान्तं
सर्वज्ञं श्रीनृसिंहं कुरु शिवदयिते सत्वरं मद्विनम्रम् ॥३॥

विद्यानाथाब्जनेत्रप्रमुखसुरवराराध्यपादारविन्दे
विद्यादानप्रवीणे प्रणतजनमनोबोधदानव्रताढ्ये ।
कायश्रीधिक्कृतोद्यद्दिनकरनिकरे चक्रराजासनस्थे
सर्वज्ञं श्रीनृसिंहं कुरु शिवदयिते सत्वरं मद्विनम्रम् ॥४॥

## श्रीनृसिंहस्तोत्रम् ॥

शैलाग्रावासलोलः प्रणतजनसुखापारवाराशिसोमः
कारुण्याम्भोधिवेलीकृतनिजहृदयश्चन्द्रकोटिप्रकाशः ।
छत्रीभूताहिनाथो वरभयहरभृच्चक्रहस्तः पिनाकी
प्रह्लादप्राणभूतस्तिरयतु तमसां स्तोममायुष्मतस्ते ॥

इति त्रिष्वाशीर्वचनात्मकस्तवाः संपूर्णाः ॥

॥ श्रीः ॥

# ॥ आत्मस्तवः ॥



शमदमसाधनयुक्तै-
  र्वेत्तुं योग्ये गुरुप्रसादेन ।
अयमात्मनि रमतां किं
  वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १ ॥

अन्नमयादिषु पञ्चसु
  ममताहीनैः सुखेन संवेद्ये ।
अयमात्मनि रमतां किं
  वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ २ ॥

सकलागमान्तगेये
  सकलजगद्व्याप्य संस्थितेऽनन्ते ।
अयमात्मनि रमतां किं
  वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ३ ॥

आदौ प्रजाधिनाथे-
नोक्ते प्रणताय मघवते बहुशः ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ४ ॥

इनचन्द्रतारकादिम-
जगतामवभासके स्वतः स्फुरति ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ५ ॥

नचिकेतसे ऋषीश्वर-
पुत्रायात्यादरेण मृत्यूक्ते ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ६ ॥

भ्रूमध्यहृदयशीर्षे
ष्वाहितचेतोभिराशु संवेद्ये ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ७ ॥

मायामात्रादादृत-
निखिलजगज्जन्ममुख्यकर्तृत्वे ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ८ ॥

मुनिनिकराय पुरा खलु
वटमूलगतेन शंभुनादिष्टे ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ९ ॥

यतिवरसदाशिवेन्द्रै-
रार्याभिस्तोषपूर्वसंगीते ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १० ॥

सुतगेहधनकलत्रा-
द्यासक्तानां सुदूरतरे ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ११ ॥

संन्यस्तसर्वकर्मभि-
रावेद्येऽत्यन्तसूक्ष्मशेमुषिभिः ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १२ ॥

तृणतोऽप्यतिलघुतरमिद-
मखिलं विश्वं विलोकयन्योगात् ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १३ ॥

दृश्यं हि नामरूपं
रज्जूरगतुल्यमेव निश्चिन्वन् ।
अयमात्मनि रमतां किं
वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १४ ॥

**इति आत्मस्तवः संपूर्णः ॥**



॥ श्रीः ॥

# ॥ उपशान्त्यष्टकम् ॥



अनुपासादितसुगुरो-

रविचारितवेदशीर्षतत्त्वस्य ।

कथमुपशान्तिः स्याद्वो

सततं सत्सङ्गरहितस्य ॥ १ ॥

अन्नमयादिषु पञ्च-

स्वहंमतिं यावदेष न जहाति ।

तावत्कथमुपशान्तेः

पात्रं प्रभवेच्छुकादितुल्योऽपि ॥ २ ॥

चरतामक्षाश्वानां

रूपप्रमुखेषु विषमविषयेषु ।

दोषविमर्शकशाहति-

मकुर्वतः स्यात्कथं शान्तिः ॥ ३ ॥

तत्त्वावबोधमणिवर-
भूषणहीनं यदीयहृदयं स्यात् ।
कथमुपशान्तिर्वृणुया-
त्तं पुरुषं सादरं लोके ॥ ४ ॥

नक्तंदिवं पराचि
प्रवणस्वान्तस्य देहसक्तधियः ।
कथमुपशान्तिः पुंसः
प्रभवेदपि कल्पकोटिशतैः ॥ ५ ॥

योगाख्यगारुडमनु-
प्रवरेण कृतो न येन रदभङ्गः ।
तृष्णाकृष्णभुजङ्गयाः
कथमुपशान्तिर्भवेत्तस्य ॥ ६ ॥

सुतगेहमित्रतरुणी-
प्रभृतिषु यस्यास्ति दृढतरः स्नेहः ।
स कथमुपशान्तिविषया-
मपि गाथां गातुमीश्वरः स्याद्धो ॥ ७ ॥

संत्यजति नैव कर्मा-
    ण्यखिलान्यविगीतमार्गेण ।
सशिखं च यज्ञसूत्रं
    यः स कथं शान्तिभाजनं प्रभवेत् ॥ ८ ॥

इति उपशान्त्यष्टकं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ उपदेशचतुर्विंशतिः ॥



करणं सर्वसिद्धीनां
चित्तानुसरणं गुरोः ।
इति निश्चित्य सर्वेषु
कार्येषु प्रविशार्भक ॥ १ ॥

सुतेषु करुणा यद्व-
त्प्रसवित्र्यास्ततोऽपि च ।
प्रभूता करुणा शिष्ये
सद्गुरोरिति निश्चिनु ॥ २ ॥

मातापितरावस्मि-
ञ्जन्मन्येवार्भकस्य सुखवृद्धिम् ।
इच्छत आगामिजनुः-
सौख्यं स्मरतो न जात्वपि हि ॥ ३ ॥

शिष्यस्य सद्गुरुः खलु
संचितमुखपापसङ्गराहित्यम् ।
किंचावृत्तिविहीनं
ब्रह्मपदं काङ्क्षते कृपया ॥ ४ ॥

सौख्यं च तदपि संश्रृणु
यत्पितराविच्छतस्तनूजस्य ।
भार्यां बिभर्तु तनया-
न्प्राप्नोतु तनोतु सतततद्रक्षाम् ॥ ५ ॥

आर्जयतु च धनमनिशं
यया कयाचित्प्रणाल्यायम् ।
अपि नौ जीर्णवयस्कौ
पातु च मोदेन सर्वविषयेषु ॥ ६ ॥

राज्ञां वा धनिकानां
मनोऽनुवृत्तिं विधाय तनुजातः ।
अभ्यधिकं तत्तोषं
प्राप्नोतु च तेन बहुलधनम् ॥ ७ ॥

इति बहुलदुःखमेव हि
सौख्याभासं तनूजस्य ।
पितरौ लोके रात्रि-
दिवमेवं चिन्तयन्तौ स्तः ॥ ८ ॥

मा सज्जतु मच्छिष्यो
धनदारास्निग्धपुत्रगेहेषु ।
तद्रक्षणार्थमर्थ-
ग्रहणे यत्नं न कंचिदपि कुर्यात् ॥ ९ ॥

मा कुरुतादशनानां
विवृतिं धनिकाग्रतः कदाचिदपि ।
मा भूपतोषणार्थं
स्तुतिमपि वितनोतु दीनवाक्सरणिम् ॥ १० ॥

मांसासृङ्मलराशौ
देहेऽहंता कदापि मा भवतु ।
नश्वरतमेषु जात्वपि
भोगेष्वास्थालवोऽपि मा भूयात् ॥ ११ ॥

मा सार्वभौमपदवीं
वाञ्छतु मा देवराजतां क्वापि ।
शमदान्त्युपरतिमुखषट्-
संपदमाप्नोतु सुस्थिरां शीघ्रम् ॥ १२ ॥

नित्यानित्यविवेकं
मोक्षप्रासादगमननिःश्रेणिम् ।
दृढतरमुमुक्षुताम-
प्याश्रयतात्सत्वरं सुखेनैव ॥ १३ ॥

सुविधाय सशिखवपनं
छित्त्वा कर्मार्थमादृतं सूत्रम् ।
स्वीकृतपारमहंस्यो
विहर सुखेनेति सद्गुरुर्ब्रूते ॥ १४ ॥

यदि यौ कौचित्पितरा-
विच्छत आत्मोद्भवस्य परमपदम् ।
तौ तर्हि सद्गुरुस्थल-
कृताभिषेकौ विजानीहि ॥ १५ ॥

पित्रोश्च सद्गुरोर-
प्यन्तरमेवं विमृश्य वत्स चिरम् ।
नित्यसुखेच्छा चेत्तव
तरसा व्रज सद्गुरुं शरणम् ॥ १६ ॥

सद्गुरुरिह संप्राप्तं
शिष्यं तत्त्वं यथावदुपदिश्य ।
दयया नैसर्गिक्या
नित्यसुखं प्रापयेत्तरसा ॥ १७ ॥

इति यतिवचःप्रबुद्धः
शिशुरूहापोहदक्षमतिरेवम् ।
पप्रच्छ मुक्तिकाम-
स्त्यक्तैहिकपारलौकिकेच्छः सन् ॥ १८ ॥

शिष्य उवाच—

सद्गुरुसेवनमेव हि
नित्यसुखावाप्तिसाधनं ब्रूषे ।
सद्गुरुरीदृश इति मे
यतिवर तल्लक्षणं ब्रूहि ॥ १९ ॥

गुरुरुवाच—

निर्हेतुककरुणाजनि-
भूमिः संत्यक्तविषयेच्छः ।
लुप्तस्वपरत्वमतिः
स्मितलसदास्याम्बुजः सततम् ॥ २० ॥

शीलितनिगमान्तततिः
पालितमैत्रीप्रमुख्यगुणजालः ।
तत्त्वोपदेशनिरतः
सत्वरमेवाङ्घ्रिनम्रलोकानाम् ॥ २१ ॥

सक्रोधानक्रोधा-
न्रागाढ्यान्रागनिर्मुक्तान् ।
कुर्वाणो विषयेष्वति-
वैरस्यं बोधयंस्तरसा ॥ २२ ॥

लोकार्थमाश्रमोचित-
चर्यानिरतः समाधिरहितेषु ।
कालेषु किंच कृष्ण-
द्वैपायनसूत्रजालबोधयिता ॥ २३ ॥

हठराजमुख्ययोगा-
नधिकारिविभेदतः प्रणम्रेभ्यः ।
प्रतिपादयन्नजस्रं
हर्षप्राग्भारतुन्दिलस्वान्तः ॥ २४ ॥

इति उपदेशचतुर्विंशतिः संपूर्णा ॥



॥ श्रीः ॥

# ॥ आत्मावबोधनस्तोत्रम् ॥



जाग्रत्स्वप्नसुषुप्तिषु
शैशवकौमारवार्धकेष्वपि च ।
अनुवर्तमानमनिशं
ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १ ॥

सद्गुरुसवनानरतः
स्वाश्रमवर्णोचितानि कर्माणि ।
कुर्वद्भिर्विविदिषितं
ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ २ ॥

उद्दालकः स्वपुत्रं
यत्तत्त्वमसीति बोधयामास ।
साम्नामन्ते तदहं
ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ३ ॥

स्थूलात्सूक्ष्माद्धेतो-
देहाद्भेदेन योगनिष्णातैः ।
अनुचिन्त्यमानमसकृ-
द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ४ ॥

यददेहमखिलदेहे-
ष्वनवस्थेषु व्यवस्थितं विभु च ।
महदात्मभूतमभयं
ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ५ ॥

हृदयस्थितानशेषां-
स्त्यक्त्वा कामान्समश्नुतेऽत्रैव ।
यत्परहंसस्तदहं
ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ६ ॥

यदबोधाज्जगदखिलं
विभाति पुरुषस्य सत्यतया ।
यद्बोधाच्च मृषा त-
द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ७ ॥

प्रविलाप्य दृश्यजालं
मिथ्येत्याचार्यवाक्यतः शास्त्रात् ।
यत्प्राप्नोति नरस्त-
द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ८ ॥

यस्याज्ञानादखिला-
नर्थादिमकारणं शरीरादौ ।
आत्मत्वधीरभूत्त-
द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ९ ॥

यत्साक्षात्कृतये हि
श्रवणं मननं तथा ध्यानम् ।
प्राहुस्त्रय्यन्तास्त-
द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १० ॥

नद्यास्तीरे पुलिने
गिरिमौलौ काननस्य कोणे यत् ।
ध्यायन्ति यतिवरास्त-
द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ११ ॥

यत्र स्थितो विजाना-
 तीन्द्रोपेन्द्रादिपदमपीषदिति ।
तत्सुखविश्रान्तिपदं
 ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १२ ॥

श्रुत्याचार्यकृपातो
 योगाभ्यासेन चेश्वरकटाक्षात् ।
प्रभवति यद्बोधस्त-
 द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १३ ॥

यस्मिन्स्थिते न दुःखै-
 रपि गुरुभिश्चाल्यते जातु ।
पुरुषः सुखरूपं त-
 द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १४ ॥

यत्पृथ्व्यादिषु तिष्ठ-
 द्यमयति यद्वेद नैव पृथ्व्यादिः ।
अन्तर्याम्यभिधं त-
 द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १५ ॥

विषयासक्तहृदां य-
  द्दूरं तदसक्तचेतसां निकटे ।
उपरतवरलभ्यं त-
  द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १६ ॥

विनियम्य चक्षुरादी-
  न्प्राणापानौ च चेतसा सह यत् ।
ध्यायन्ति योगिनस्त-
  द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १७ ॥

सनकादिभ्यः पूर्वं
  वटमूले शंभुराह मौनेन ।
चिन्मुद्रया च यत्त-
  द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १८ ॥

**इति आत्मावबोधनस्तोत्रं संपूर्णम् ॥**



॥ श्रीः ॥

# ॥ भवबन्धमुक्त्यष्टकम् ॥



एकं द्वितीयरहितं सदबाधितं च
सच्चित्स्वरूपमिति यच्छ्रुतिशीर्षपूगैः ।
जेगीयते सकललोकविवर्तभूतं
तद्भावयामि सततं भवबन्धमुक्त्यै ॥ १ ॥

अन्नासुमानसमुखप्रकृतीञ्जगाद
कोशाञ्छ्रुतिर्यदवबोधकृतेऽत्र पञ्च ।
सर्वान्तरं भृगुमुनिप्रवरेण दृष्टं
तद्भावयामि सततं भवबन्धमुक्त्यै ॥ २ ॥

आनाशकेन तपसा बहुदक्षिणेन
यज्ञेन दाननिचयाच्छ्रुतिपाठतश्च ।
इच्छन्ति वेत्तुमिह यद्धरणीसुराग्र्या-
स्तद्भावयामि सततं भवबन्धमुक्त्यै ॥ ३ ॥

कश्चिद्द्विपश्चिदिह संसृतिसौख्यवाञ्छां
संत्यज्य सद्गुरुमुपेत्य कृपापयोब्धिम् ।
विज्ञाय तद्वचनतः खलु मोदते य-
त्तद्भावयामि सततं भवबन्धमुक्त्यै ॥ ४ ॥

प्राणान्नियम्य तु मनो हृदयारविन्दे
भ्रूगह्वरे शिरसि वा प्रणिधाय सम्यक् ।
ध्यायन्ति यत्परगुरोर्वचनानुसारा-
त्तद्भावयामि सततं भवबन्धमुक्त्यै ॥ ५ ॥

यज्जाग्रदादिसमये धृतविश्वमुख्य-
नामातनोति बहिरन्तरवस्तुसेवाम् ।
सुप्तावबोधसहितस्य सुखस्य भोक्तृ
तद्भावयामि सततं भवबन्धमुक्त्यै ॥ ६ ॥

वागादयःस्वविषयेषु चरन्ति येन
संचोदिताः प्रभुवरेण यथा सुभृत्याः ।
तत्सर्वकार्यकरणव्यवहारसाक्षि
संचिन्तयामि सततं भवबन्धमुक्त्यै ॥ ७ ॥

संन्यस्य कर्मनिचयं च तदङ्गभूतं
सूत्रं शिखां च पुनरप्यबलादिरागम् ।
बोधाय यस्य यतते परिशुद्धचित्त-
स्तद्भावयामि सततं भवबन्धमुक्त्यै ॥ ८ ॥

पद्याष्टकं पठति योऽर्थविबोधपूर्वं
संचिन्तयन्ननुदिनं प्रतिपाद्यवस्तु ।
भक्त्या युतः कलुषदूरनिजान्तरङ्ग-
स्तस्याचिराद्धि भविता भवबन्धमुक्तिः ॥ ९ ॥

इति भवबन्धमुक्त्यष्टकं संपूर्णम् ॥





# ॥ अनादित्वपरिष्कारः ॥



अनाद्यविद्यासचिवः

करोति य इदं जगत ।

स पायादनुकम्पार्द्र-

चेतांश्चन्द्रार्धशेखरः ॥ १ ॥

ननु किमिदमनादित्वमविद्यायाः? न ताव-त्प्रागभावाप्रतियोगित्वम्, प्रागभावेऽतिव्याप्तेः । किं च, सिद्धान्ते मूलाविद्यायां लक्षणसमन्वये-

ऽपि तूलाविद्यानां सादित्वात्तास्वव्याप्तिश्च । न च 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुत्या मायैकत्वप्रतिपादनात्, मायाविद्ययोश्चैक्यात्, मूलाविद्याया एव लक्ष्यत्वमिति तूलाविद्यासु लक्षणासत्त्वमिष्टमेवेति वाच्यम्; 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुत्यैकवाक्यतासंपत्तये 'मायां तु' इत्यादिश्रुत्यन्तर्गतैकवचनस्य जात्येकपरतयैव नेयत्वात् । न च विनिगमनाविरहेण 'मायां तु' इत्यादिश्रुत्यैकवाक्यतासंपत्तये 'इन्द्रो मायाभिः' इत्यादिश्रुत्यन्तर्गतबहुवचनस्य मायावृत्तिगतबहुत्वपरत्वमेवोचितमिति वाच्यम्; एवम् 'अयमनादिरनन्तो नैसर्गिकोऽध्यासः' इत्यादिभाष्यविरोधापत्तेः । तत्रत्याध्यासपदस्याविद्यापरत्वात् । न च भाष्यस्यानन्तपदं नानेकत्वविशिष्टपरम्, अपि तु नाशरहितपरमिति वाच्यम्; तथा सति 'अस्यानर्थहेतोः प्रहाणाय' इत्यध्यासनाशप्रतिपादकभाष्य-

विरोधापत्तेः । तस्मात् 'इन्द्रो मायाभिः' इत्यादिश्रुतिस्थबहुवचनं न मायावृत्तिगतबहुत्वपरम्, किंतु मायाबहुत्वपरमेवेति तूलाविद्यानामपि लक्ष्यत्वस्याङ्गीकृततया तासु च प्रागभावाप्रतियोगित्वरूपानादित्वस्याभावादव्याप्तेर्दुरुद्धरतया न प्रागभावाप्रतियोगित्वमनादित्वम् । न च तासां प्रवाहतोऽनादित्वमिति शङ्क्यम्; प्रत्येकमविद्याव्यक्तीनां सादित्वात्, प्रवाहस्य चावस्तुत्वादिति चेत् ।

अत्र केचित्— 'कालत्वव्यापकतावच्छेदकाविद्याकत्वमेव प्रवाहतोऽनादित्वम्, कालत्वं चाविद्याचित्संबन्धः । इत्थं च यत्राविद्याचित्संबन्धरूपकालत्वं तत्राविद्यात्वावच्छिन्ना काचिद्व्यक्तिस्तिष्ठत्येव । संबन्धसत्त्वस्य संबन्धिसत्त्वव्याप्यत्वात्' इत्याहुः । तन्न; अविद्यात्वे कालत्वव्यापकतावच्छेदकत्वं हि कालत्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकत्वमेव । तथा

चाविद्याचित्संबन्धरूपकालत्वविगमेऽपि ब्रह्मणि तदधिकरणत्वं नापैति । यथा घट उत्पत्तिक्षणावच्छेदेन गन्धाभावेऽपि गन्धाधिकरणत्वं न हीयते । इत्थं च निरुक्तकालत्वाधिकरणे ब्रह्मणि मुक्ततादशायां कस्याश्चिदप्यविद्यात्वावच्छिन्नव्यक्तेरभावात् अविद्यात्वस्य निरुक्तकालत्वव्यापकतावच्छेदकत्वासंभवात् ॥

गुरुचरणास्तु— प्रवाहतो अनादित्वं नाम— स्वप्रागभावाधिकरणकालत्वव्यापकस्वसजातीयकत्वम् । यद्रूपावच्छिन्ने लक्षणं संगमनीयं तद्रूपावच्छिन्नमेव स्वपदार्थः । स्वपदेनाविद्याव्यक्तेः परिग्रहे स्वप्रागभावाधिकरणकालत्वं स्वपूर्वकाले तत्र चाविद्यात्वेन स्वसजातीयव्यक्तेर्नियमेन सत्त्वाल्लक्षणसमन्वयः । स्वप्रागभावाधिकरणकालत्वमित्यस्य सामानाधिकरण्यसंबन्धेन स्वप्रागभावविशिष्टकालत्वमित्यर्थः । तथा च मुक्तदशायां ब्रह्मणि कालत्वाधिकरणत्वसत्त्वेऽपि स्वप्रागभावा-

भावान्न पूर्वोक्तदोषावकाशः ॥

यदि कश्चिद्ब्रूयात्— 'सिद्धान्ते प्रागभावानङ्गीकारेण प्रागभावघटितोऽयं परिष्कारो न साधीयान्' इति, तं प्रतिब्रूयात्— सिद्धान्तेऽप्यसत्कार्यवादापत्तिभिया कार्याणां प्रागभावस्थानापन्नायाः प्रागवस्थायाः स्वीकार्यत्वात् । अन्यथा, मृद्येव घटः, क्षीर एव दधीत्यादिनियमभङ्गप्रसङ्गात् । तदेतत् 'युक्तेः शब्दान्तराच्च' इति सूत्रव्याख्यानावसरे भगवत्पादैरभ्यधायि । तथा च पूर्वोक्तपरिष्कारे प्रागभावस्थाने प्रागवस्थाया एव निवेशनीयत्वेन उक्तपरिष्कारस्य निर्दुष्टत्वात् । अधिकमन्यत्रानुसंधेयमिति प्राहुः ॥

अनादित्वपरिष्कारा
दविद्याया यथामति ।
तुष्यन्तु सुधियस्त्वन्य-
गुणैकक्रुतदृष्टयः ॥ १ ॥

एवं वा विन्यासः—

प्रीयतां गिरिजाचित्त-
सरोरुहदिवाकरः ॥ २ ॥

इति अनादित्वपरिष्कारः समाप्तः ॥



॥ ॐ ॥

# ॥ पुरुषार्थनिर्णयः ॥



पुरुषार्थदानदक्षं
पुरुहूतप्रमुखनिर्जराराध्यम् ।
पुरुषार्थसिद्धयेऽहं
पुरुषं कृष्णाद्यपिङ्गलं नौमि ॥ १ ॥

तत्र तावत्कः पुरुषार्थो नाम ? न तावदनुकूलपुत्रमित्रकलत्रादिः ; तदनित्यत्वस्य प्रत्यक्षसिद्धत्वात् । न च 'एतत्त्रयं जगति पुण्यकृतो लभन्ते ' इति तस्यापि सुकृतसाध्यत्वेन नित्यत्वमिति शङ्क्यम् ; न हि जलजन्यत्वसाम्येऽपि बुद्बुदतरङ्गफेनवारिजानां स्थिरत्वसाम्यमस्ति ; तस्माद्धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः । तत्र धर्मो ना-

म— आशुविनाशिनां विहितकर्मणां कालान्तर-भाविफलजनकत्वान्यथानुपपत्त्या कल्प्यमानोऽदृष्टपदार्थविशेषः । तथा हि— यागगङ्गास्नानशिवपूजादीनां हविःप्रक्षेपणगङ्गाजलमज्जनशिवलिङ्गादिषु पुष्पक्षीरादिसमर्पणादिरूपाणां यावत्कार्योत्पादास्थायित्वस्य सार्वलौकिकत्वात्तत्कल्पने तु फलाव्यवहितप्राक्क्षणवृत्तिस्वस्वव्यापारान्यतरकर्तृत्वरूपफलजनकत्वस्य कालान्तरकृतकर्मणामपि सूपपादकत्वात् । अर्थो नाम—पूर्वोक्तधर्मानुकूलयागादिसाधनीभूतधनधान्यादिः । कामस्तु— उक्तधर्मजनककर्मसु प्रवर्तकः 'धर्मो मे भूयात्' इतीच्छारूपः । न तु निषिद्धकर्मकारकः कामः, तस्य पुरुषार्थत्वाभावात्प्रत्युत पुरुषदुःखहेतुत्वात् । किंच, भगवद्गीतायां भगवानप्येवमाह—

'धर्माविरुद्धो भूतेषु
कामोऽस्मि भरतर्षभ' इति ।

मोक्षस्तु— तत्त्वज्ञानैकसाध्यः । तत्स्वरूपमुत्तरत्र वर्ण्यते ॥

अत्रेदं चिन्त्यते— चतुर्ष्वप्येतेषु कः परम इति । न च पुरुषार्थत्वाविशेषाच्चत्वारोऽपीमे समाना एवेति निश्चेतुं शक्याः । न हि मनुष्यत्वाविशेषेऽपि सर्वेऽपि मनुष्याः समाना उपलभ्यन्ते; कश्चित्प्रभुः, कश्चिद्भृत्यः, कश्चित्सुखी, कश्चिद्दुःखीति भेददर्शनात् । तस्मात्प्राप्तं पुरुषार्थत्वाविशेषेऽपि चिन्त्यमेतेषु पारम्यमिति । न चार्थकामौ परमौ, तयोर्धर्महेतुत्वेन धर्म एवोपक्षीणतया स्वतः पुरुषार्थत्वाभावात् । अत एव न धर्मोऽपि परमः पुमर्थः; तस्य स्वर्गादिसाधनत्वेनोपसर्जनत्वात् । तथा हि श्रुतिः— 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'वायव्यꣳश्वेतमालभेत भूतिकामः' इति स्वर्गादिसाधनत्वमाह धर्मस्य । न चेयं श्रुतिर्न धर्मस्य स्वर्गकारणत्वमाह, अपि तु ज्योतिष्टोमादेरिति वाच्यम् ।

यागादेर्धर्मव्यापारकत्वस्यावश्यकल्प्यतया धर्मस्य स्वर्गकारणताया धर्मिग्राहकमानसिद्धत्वात् । न चैतेषां त्रयाणां पुरुषार्थत्वमपि संभवति । तथा हि— पुरुषार्थो नाम— वस्तुतः सुखम्, दुःखाभावो वा । तथा च लोकेऽनुभवः— 'इष्टं मे भूयादनिष्टं मे मा भूत्' इति । न चेमे त्रयः सुखं दुःखाभावो वा । तर्हि, कथमेतेषां पुरुषार्थकोटिप्रविष्टत्वमिति चेत्, तत्साधनत्वादिति ब्रूमः । यथा लाङ्गलस्य जीवनत्वाभावेऽपि जीवनसाधनत्वेन 'लाङ्गलं जीवनम्' इति प्रयोगः, तद्वत्पुरुषार्थसाधनत्वेनैतेषु पुरुषार्थपदप्रयोगः । किंचैतेषामनित्यत्वादपि न परमपुरुषार्थत्वम् । तथा हि— अर्थकामयोस्तावत्प्रत्यक्षेणैवानित्यत्वम् । धर्मस्य त्वतीन्द्रियत्वेन श्रुत्यां स्मृत्या चावगम्यते । तथा च श्रुतिः— 'यद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते', इति । स्मृतिश्च— 'क्षीणे

पुण्ये मर्त्यलोकं विशन्ति' इति । तर्हि कः परमपुरुषार्थ इति चेन्मोक्ष एवेत्यवेहि । तथा हि— तस्य 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुत्या सुखस्वरूपत्वस्य, 'तरति शोकमात्मवित्' इत्याद्यया च दुःखनिवृत्तिरूपत्वस्य च प्रतिपादनात्स्वतः पुमर्थत्वम्, नित्यत्वं च 'न स पुनरावर्तते' 'तेषां न पुनरावृत्तिः' 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इत्यादिश्रुतिभ्यः ॥

"आब्रह्मभुवनाल्लोकाः
पुनरावर्तिनोऽर्जुन ।"

"मामुपेत्य पुनर्जन्म
दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः
संसिद्धिं परमां गताः ॥"

"इदं ज्ञानमुपाश्रित्य
मम साधर्म्यमागताः ।

सर्गेऽपि नोपजायन्ते
प्रलये न व्यथन्ति च ॥"
"यद्गत्वा न निवर्तन्ते
तद्धाम परमं मम ।"

इत्यादिस्मृतिभ्यश्च । किंच, अनित्यविलक्षणत्वादपि नित्यत्वम् । लोक उत्पाद्यप्राप्यसंस्कार्यविकार्याणामनित्यत्वं दृष्टम् । न चासौ मोक्ष उत्पाद्यः; नित्यो हि मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते । नापि प्राप्यः, आत्मस्वरूपत्वेन नित्याप्तत्वात् । नापि संस्कार्यः, नित्यशुद्धनिरतिशयत्वान्मोक्षस्य । नापि विकार्यः, कूटस्थब्रह्मस्वरूपत्वान्मोक्षस्य । तस्मान्नित्यत्वात्स्वतः पुंमर्थत्वाच्च मोक्ष एव परमपुरुषार्थः । न च 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्' 'अपाम सोममममृता अभूम' इत्यादिश्रुतिभिः कर्मफलस्यापि नित्यत्वप्रतिपादनात्कथं मोक्षस्यैव नित्यफलत्वमिति वाच्यम्; अस्याः श्रुतेः 'यत्कृतकं तदनि-

त्यम्' इति न्यायोपेतया 'तद्यथेह' इत्यादिश्रुत्या बाधेन अत्रत्याक्षय्यामृतपदयोः आभूतसंप्लवस्थायिस्थानपरत्वस्यैव वक्तव्यत्वात्। तथा च स्मृतिः—

"आभूतसंप्लवं स्थान-
　ममृतत्वं हि भाष्यते"। इति।

इत्थं हि व्यवस्था— श्रुतिस्मृत्योर्विरोधे श्रुत्यनुसारेण स्मृतिर्नेया, श्रुत्योः परस्परं विरोधे न्यायोपेतश्रुत्यनुसारेण श्रुत्यन्तरं नेयमिति। तस्मान्मोक्ष एव नित्य इति सिद्धम्॥

मोक्षो नाम— सालोक्यसामीप्यसारूप्यसायुज्यकैवल्यभेदेन पञ्चविधः। तत्र सालोक्यं तत्तदुपास्यदेवतावासस्थानभूतलोकप्राप्तिः। सामीप्यमुपास्यदेवतासमीपवर्तनम्। सारूप्यं देवतासमानाकारदेहप्राप्तिः। सायुज्यं सगुणस्य देवतारूपस्य अहंग्रहेणोपासनां कुर्वतः उपास्यदेव-

तातादात्म्यम् । कैवल्यं तु सच्चिदानन्दनित्यशुद्ध-बुद्धमुक्तस्वभावप्रत्यगभिन्नकूटस्थब्रह्मस्वरूपेणाव-स्थानम् । इदमेवाविद्यानिवृत्तिपदेनाप्यभिधीयते । तथा चोक्तम्—

"अविद्यास्तमयो मोक्षः
सा च बन्ध उदाहृतः ।" इति ।
"निवृत्तिरात्मा मोहस्य
ज्ञातत्वेनोपलक्षितः ।" इति च ।

अपि च,

"तस्मादविद्यास्तमयो
नित्यानन्दप्रतीतितः ।
निःशेषदुःखोऽभेदाच्च
पुरुषार्थः परो मतः ॥" इति ।

इयं कैवल्यरूपा मुक्तिरेव मुख्या । तथा च सूतसंहितायां स्वस्वरूपावस्थानमुक्तिं प्रकृत्य—

"षड्भावविक्रियाहीना
शुभाशुभविवर्जिता ।

सर्वद्वन्द्वविनिर्मुक्ता
सत्यविज्ञानरूपिणी ॥

केवलं ब्रह्मरूपोक्ता
सर्वदा सुखलक्षणा ।
न हेया नाप्युपादेया
सर्वसंबन्धवर्जिता ॥

न दृष्टा न श्रुता विष्णो
न चास्वाद्या न तर्किता ।
सर्वावरणनिर्मुक्ता
न विज्ञेया निराश्रया ॥

वाच्यवाचकनिर्मुक्ता
लक्ष्यलक्षणवर्जिता ।
सर्वेषां प्राणिनां साक्षा-
दात्मभूता स्वयंप्रभा ॥

प्रतिबन्धविनिर्मुक्ता
सर्वदा परमार्थतः ॥

अविचारदशायां तु
प्रतिबद्धा स्वमायया ॥

एषैव परमा मुक्तिः
प्रोक्ता वेदार्थवेदिभिः ।
अन्याश्च मुक्तयः सर्वा
अपराः परिकीर्तिताः ॥" इति ।

न चान्यासु सालोक्यादिरूपासु कथं मुक्तिशब्दप्रयोग इति वाच्यम्; ताः प्राप्तानां पुनरावृत्त्यभावेन क्रमेण मुख्यमुक्तिदर्शनात्तासु मुक्तिशब्दोपचारः । तथा चोक्तम्—

"ब्रह्मणा सह ते सर्वे
संप्राप्ते प्रतिसंचरे ।
परस्यां ते महात्मानः
प्रविशन्ति परं पदम् ॥" इति ।

न चास्याः कूटस्थब्रह्मस्वरूपाया मुक्तेः स्वतःसिद्धतया तदर्थं मुमुक्षूणां गुरूपसदनविचारादिषु

प्रवृत्तिर्न स्यादिति वाच्यम्; तस्याः स्वतःसिद्धत्वेऽपि विस्मृतकण्ठचामीकरन्यायेनाज्ञातत्वेन तत्प्राप्त्यै मुमुक्षूणां विचारादिषु प्रवृत्त्युपपत्तेः। विस्मृतकण्ठचामीकरन्यायस्त्वेवम्—कश्चित्पुरुषः स्वकण्ठस्थमेव चामीकरं विस्मृत्य 'अहो मदीयश्चामीकरः कुत्र वा स्थापितः केन वापहृतः' इतीतस्ततः पर्यटन्कुत्राप्यलब्ध्वा बहुधा शोचंस्तिष्ठति। अत्रान्तरे कश्चनागत्य ब्रूते— 'तावके कण्ठ एव खलु चामीकरो वर्तते, किमर्थं भवान्महान्तं शोकमापन्नः' इति। स तद्वाक्यश्रवणानन्तरं यथा स्वकण्ठस्थमेव चामीकरं ज्ञात्वा अलब्धस्य लाभादिव तुष्यतीति। अनेन न्यायेन स्वतःसिद्धापीयं मुख्या मुक्तिरात्मस्वरूपा अज्ञातत्वेन अलब्धेव सती स्वलाभाय कारणमपेक्षत एवेति युक्ता तदर्थं मुमुक्षूणां प्रवृत्तिः। कारणं तु ज्ञानमेव; 'नान्यः पन्था विद्यतेऽयनाय' 'तरति शोकमात्मवित्' 'नास्त्यकृतः कृ-

तेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' 'ब्रह्मविदाप्नोति परम्' 'ब्रह्मविद्ब्रह्मैव भवति' 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिभ्यः ॥

"बहूनां जन्मनामन्ते
ज्ञानवान्मां प्रपद्यते ।"
"ततो मां तत्त्वतो ज्ञात्वा
विशते तदनन्तरम् ॥"

इत्यादिस्मृतिभ्यश्च । तज्ज्ञानं कीदृशमित्यपेक्षायाम् अपरोक्षानुभूतौ श्रीमद्भगवत्पादैः—

"ब्रह्मैवाहं समः शान्तः
सच्चिदानन्दलक्षणः ।
नाहं देहो ह्यसद्रूपो
ज्ञानमित्युच्यते बुधैः ॥

निर्विकारो निराकारो
निरवद्योऽहमव्ययः ।

नाहं देहो ह्यसद्रूपो
ज्ञानमित्युच्यते बुधैः ॥

निरामयो निराभासो
निर्विकल्पोऽहमाततः ।
नाहं देहो ह्यसद्रूपो
ज्ञानमित्युच्यते बुधैः ॥

निर्गुणो निष्क्रियो नित्यो
नित्यमुक्तोऽहमच्युतः ।
नाहं देहो ह्यसद्रूपो
ज्ञानमित्युच्यते बुधैः ॥

निर्मलो निश्चलोऽनन्तः
शुद्धोऽहमजरोऽमरः ।
नाहं देहो ह्यसद्रूपो
ज्ञानमित्युच्यते बुधैः ॥" इति ।

'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' 'प्रज्ञानं ब्रह्म' इति महावाक्यजन्यात्म-

ण्डाकारवृत्त्यपरनामकम् । तत्प्राप्त्युपायस्तु श्रुतौ 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति, शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्' इत्यादिवाक्यैरुद्घुष्यते । पाद्मे शिवगीतायां च—

"कथं भगवतो ज्ञानं
शुद्धं मर्त्यस्य जायते ।
तत्रोपायं हर ब्रूहि
मयि तेऽनुग्रहो यदि ॥"

इति श्रीरामेण पृष्टः सञ्छ्रीभगवानाह—

"विरज्य सर्वभूतेभ्य
आविरिञ्चिपदावधि ।
घृणां वितत्य सर्वत्र
पुत्रमित्रादिकेष्वपि ॥

श्रद्धालुर्मुक्तिशास्त्रेषु
वेदान्तज्ञानलिप्सया ।

उपायनकरो भूत्वा
गुरुं ब्रह्मविदं व्रजेत् ॥

सेवाभिः परितोष्यैनं
चिरकालं समाहितः ।
सर्ववेदान्तवाक्यार्थं
श‍ृणुयात्सुसमाहितः ॥

सर्ववेदान्तवाक्यानां
मयि तात्पर्यनिश्चयम् ।
श्रवणं नाम तत्प्राहुः
सर्वे ते ब्रह्मवादिनः ॥

लोहमण्यादिदृष्टान्त-
युक्तिभिर्यद्विचिन्तनम् ।
तदेव मननं प्राहु-
र्वाक्यार्थस्योपबृंहणम् ॥

निर्मोहो निरहंकारः
समः सङ्गविवर्जितः ।

सदा शान्त्यादियुक्तः स-
न्नात्मन्यात्मानमीक्षते ॥
यत्सदा ध्यानयोगेन
तन्निदिध्यासनं स्मृतम ।
सर्वकर्मक्षयवशा-
त्साक्षात्कारोऽपि चात्मनः ॥
कस्यचिज्जायते शीघ्रं
चिरकालेन कस्यचित् ।" इति ।

तस्माद्ब्रह्मज्ञानैकसाध्यः स्वस्वरूपावस्थानलक्ष-क्षणो मोक्ष एव परमः पुरुषार्थ इति सर्वं चतुरश्रम् ॥

पुरुषार्थनिर्णयोऽयं
गुरुवरकृपया मया व्यरचि ।
वीक्ष्य प्रयान्तु मोदं
विद्वांसो वीतमत्सरास्तमिमम् ॥

इति पुरुषार्थनिर्णयः समाप्तः ॥



# श्रीशुद्धाद्वैतब्रह्मविद्या-
# धिगमप्रकारमीमांसा ॥

॥ ॐ ॥

# श्रीशुद्धाद्वैतब्रह्मविद्याधिगम-प्रकारमीमांसा ॥



परहंससंचिन्त्यमानं
  करचरणाद्यङ्गरहितमपि रम्यम् ।
सच्चित्सुखस्वरूपं
  ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १ ॥

तत्र परहंसो द्विविधः, विद्वद्विविदिषुभेदात् । तल्लक्षणं तु श्रीमद्विद्यारण्यविरचितजीवन्मुक्तिविवेके स्पष्टमुपलभ्यते । तत्र विविदिषोर्विद्याग्रहणप्रकारः कथ्यते । तथा हि— नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसंपन्नः ब्रह्मनिष्ठं सद्गुरुं प्रपद्य प्रार्थनापूर्वकं श्रवणं कुर्यात् । प्रार्थनाप्रका-

रस्तु श्रीमच्छंकरभगवत्पादाचार्यकृतविवेकचूडामणावनुसंधेयः । तथा च श्रुतिः— 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति । अत्र ब्रह्मनिष्ठपदेन संन्यास्येव विवक्षितो नेतरः, इतरेषां 'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया' इत्युक्तरीत्या सार्वदिकविचारादिरूपब्रह्मनिष्ठाया असंभवात् । अत एव श्रीमच्छंकरभगवत्पादैः मुण्डकोपनिषद्विवरणे, 'ब्रह्मनिष्ठम्, हित्वा सर्वाणि कर्माणि केवले अद्वये ब्रह्मणि निष्ठा यस्य सोऽयं ब्रह्मनिष्ठः' इति, 'न हि कर्मिणो ब्रह्मनिष्ठता संभवति, कर्मात्मज्ञानयोर्विरोधात्' इति चाभ्यधायि । न च संन्यासिनोऽपि 'न व्याख्यानपरो भवेत्' इत्याद्यध्यापननिषेधश्रवणाल्लोके सद्गुरुर्दत्तजलाञ्जलिः स्यादिति वाच्यम्; सत्कारमानपूजाभिक्षाद्युद्देश्यकाध्यापनपरत्वात्तादृशनिषेधस्य ।

अत एव मनुः 'नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्' इति भिक्षोद्देश्यकानुशासनादीन्येव निषेधति । अत एव,

'तच्चिन्तनं तत्कथन-
मन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च
ब्रह्माभ्यासं विदुर्बुधाः ॥'

'मच्चित्ता मद्गतप्राणा
बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं
तुष्यन्ति च रमन्ति च ॥'

इत्यादिवाक्यानामवैयर्थ्यम् । अत एव च कलौ लुप्तयतिधर्मरक्षणबद्धकङ्कणश्रीमच्छंकरभगवत्पादान्प्रति—

मोहसंतमसवासरनाथां-
स्तत्र तत्र विनिवेश्य विनेयान् ।

पालनाय परतत्त्वसरण्या
मामुपैष्यसि ततः कृतकृत्यः ॥

इति विश्वेश्वराज्ञापि नानर्थकपदभाग्भवति ॥

ननु, संन्यासिविद्यागुरोरलाभे का गतिरिति चेत्, सर्वमतसिद्धसंन्यासिगुर्वेकलभ्यत्वकस्य महावाक्योपदेशस्य या गतिः सैवेत्यवेहि । यदि महावाक्योपदेष्टापि गृहस्थः स्यात्तर्हि तुरीयाश्रमो वन्ध्यासूनुतां विन्देत् । न च यतिधर्मप्रबोधवाक्याद्गृहस्थस्यापि गुरुत्वं संभवतीति वाच्यम्, पूर्वोक्तमुण्डकोपनिषद्विवरणाविरोधादश्रद्धेयत्वात् । यदि तच्छ्रद्धेयत्वेऽप्याग्रहस्तदा—

'विना विप्रेण कर्तव्यं
श्राद्धं कुशचटेन वै ।
आत्मानं वापि भुञ्जीत
न विप्रं वेदवर्जितम् ॥'

इत्यादिवाक्यस्य, यथा श्राद्धे वेदविद्विप्रनि-

मन्त्रणावश्यकत्व एव तात्पर्यम्, न तु कुशचटेनात्मना वा कुर्यादित्यत्र; तथा यतिधर्मप्रबोधवाक्यस्यापि गृहिणो ब्रह्मविद्यागुरुत्वे न तात्पर्यम्। परं तु ब्रह्मविद्याग्रहणावश्यकत्वप्रदर्शने तात्पर्यमित्यङ्गीकृत्य तच्छ्रद्धेयत्वमुपपादनीयम्। क्षत्रियकर्तृकब्राह्मणकर्मकवैश्वानरविद्याध्यापनबोधिकायाः क्षत्रियस्य तद्विद्यामात्राध्यापकत्वपर तया ब्रह्मविद्यादौर्लभ्यपरतया युगान्तपरतया वा नेतुं शक्यायाः, छान्दोग्यश्रुतेबलात्, वर्णविनिमयेनेव आश्रमविनिमयेनापि गुरुत्वसंभावनाधीना गृहिणोऽपि ब्रह्मविद्यागुरुत्वप्रत्याशा, मनुष्यत्वमात्रसाम्यादतिदीनस्य महासाम्राज्यप्रत्याशातुल्यतां कथं न प्राप्नुयात्। किंच, मुण्डकोपनिषच्छिष्यगुरुलक्षणप्रदर्शनपूर्वकं श्रीमच्छुद्धाद्वैतब्रह्मविद्याधिगमप्रकारप्रदर्शनार्थं प्रवृत्ता। तस्याम् 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्' इति, 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छे-

त्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति, 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति च श्रूयमाणत्वात् । अतोऽनधिगतार्थबोधकत्वरूपप्राबल्यवत्पूर्वोक्तश्रुत्यनुसारेणैव केवलविद्याबोधकच्छान्दोग्यादिश्रुतयो नेयाः । इत्थं च गौतमस्मृतिसूतसंहितादिवचनानां पूर्वोक्तश्रुत्यनुसारेण नेयत्वं कैमुतिकन्यायसिद्धम् ॥

यत्तु, हीनवर्णस्यापि ब्रह्मविद्यागुरुत्वप्रत्यायनेच्छया शुकोपाख्यानोदाहरणम्, तदुपहासास्पदमेव । तत्र पितृसकाशाच्छ्रुतोपनिषत्कस्यैव शुकस्य पित्रनुज्ञातस्य संवादार्थं जनकसमीपगमनस्य प्रतिपादितत्वात् । न च प्राचीनशालसत्ययज्ञादीनां विद्याप्रदः केकयराजः संन्यास्येवेति वाच्यम् ।

'मुखजानामयं धर्मो
वैष्णवं लिङ्गधारणम् ।

बाहुजातोरुजातानां
नैव धर्मो हि विद्यते ॥'

इति क्षत्रियस्य संन्यासनिषेधात् । यदि च क्षत्रियस्यापि संन्यासित्वबोधिका काचिच्छ्रुतिः स्मृतिर्वोपलभ्येत, तदा सिद्धं नः समीहितम् । यतो न वयं क्षत्रियत्वादिकमुद्देश्यतावच्छेदकीकृत्य ब्रह्मविद्यागुरुत्वाभावं साधयामः, किं तु संन्यासित्वापरनामब्रह्मनिष्ठत्वाभावमुद्देश्यतावच्छेदकीकृत्य । यदि केकयराजः संन्यासी स्यात्तदा किं नश्छिन्नम् । वर्णविनिमयस्तु नास्माकमेव दोषः ॥

किंच, सूतसंहितायां हीनवर्णस्य उत्तमवर्णगुरुत्वकथनप्रकरणे

'गुरुत्वं केचिदिच्छन्ति
स्वोत्तमं प्रति केशव'

इत्यत्र श्रूयमाणं केचित्पदं हीनवर्णस्य उत्तम-

वर्णगुरुत्वविषये सूतसंहिताया न मुख्यं तात्पर्यमिति द्योतयति ॥

यदि कश्चिद्ब्रूयात्— हीनवर्णस्य उत्तमवर्णगुरुत्वाभावेऽपि हीनाश्रमिणोऽपि विद्योत्कर्षबलेन उत्तमाश्रमिगुरुत्वप्रतिपादकसूतसंहितावचनबलात् , हीनाश्रमिणः उत्तमाश्रमिगुरुत्वं निष्प्रत्यूहमेवेति ; स चेत्थं प्रष्टव्यः—किं त्वदभिमतः हीनाश्रमिणः उत्तमाश्रमिगुरुत्वप्रयोजकीभूतविद्योत्कर्षः, मुण्डकोपनिषद्विवरणे श्रीमद्भगवत्पादव्याख्यातब्रह्मनिष्ठत्वापरनामा, आहोस्विद्वाग्वैखर्यादिरूपः ? हीनाश्रमिणः पूर्वोक्ताद्यविद्योत्कर्षाङ्गीकारे हीनाश्रमिणो हीनाश्रमित्वमेव गगनकुसुमायितं भवेत् । द्वितीयस्य तूत्कर्षस्य ब्रह्मविद्यागुरुत्वाप्रयोजकत्वम्

वाग्वैखरी शब्दझरी
शास्त्रव्याख्यानकौशलम् ।

वैदुष्यं विदुषां तद्व-
द्भुक्तये न तु मुक्तये ॥

अतः प्रयत्नाज्ज्ञातव्यं
तत्त्वज्ञात्तत्त्वमात्मनः ॥

इत्यादि वदद्भिः श्रीमद्भगवत्पादैरेव प्रकटीकृतमिति हीनाश्रमिणः उत्तमाश्रमिगुरुत्वसिद्धौ, वत्स तव का वा प्रत्याशेति ॥

इदं त्ववधेयम्— इतराश्रमिणां मोचकब्रह्मविद्यायामधिकार एव नास्ति । 'त्रयः पुण्या लोकभाजः, एकोऽमृतत्वभाक्, ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुतेः ।

'त्यक्ताशेषक्रियस्यैव
संसारं प्रजिहासतः ।
जिज्ञासोरेव चैकात्म्यं
त्रय्यन्तेष्वधिकारिता ॥

इति वार्तिकाच्च । परं तु, स्वस्वकर्माविरोधेन

कृतः केवलब्रह्मविद्याभ्यासस्तेषां पापक्षयाय भवतीति । 'स्वयं तरितुमक्षमः किमपरानसौ तारयेत्' इति न्यायेन इतराश्रमिणां ब्रह्मविद्यागुरुत्वं शशविषाणतुल्यम् । एतद्विस्तरस्तु श्रीमद्भगवत्पादविरचितैतरेयोपनिषद्विवरणादिभागे विद्वद्भिरनुसंधेयः; तस्माद्ब्रह्मनिष्ठस्यैव ब्रह्मविद्यागुरुत्वमिति सिद्धम् । एवं च सति केषांचित् गृहिणोऽपि ब्रह्मविद्यागुरुत्वस्य शास्त्रीयात्मभ्रममूलको वैश्वानरविद्यादृष्टविनिमयसाम्यमात्रेण संन्यासिनिरूपितगुरुत्वभ्रमः, तदधीनो यो गृहिकर्मकसंन्यासिकर्तृकवन्दनस्य शास्त्रीयत्वादिविचारः, स कथं जन्मवन्ध्यायाः प्रपौत्रपोषणविचारसदृशतां न व्रजतीति सुधियो विदांकुर्वन्त्वित्यलमप्रस्तुतचिन्तया । अतो विविदिषुः परमहंसो मैत्र्यादिगुणगणमण्डितं ब्रह्मनिष्ठं गुरुमासाद्य तन्निकटे कृतश्रवणमननः पश्चात्तद्दत्तयुक्त्या चिरकृतनिदिध्यासनः ततः संजातब्रह्मसाक्षात्कारः

सुखं विहरेदिति सर्वमवदातम् ॥

मन्मानसगतिचतुरः
चिदचित्क्षीराम्बुभेदकृतिदक्षः ।
नरसिंहनामलसितः
कृत्या प्रीतिं प्रयातु परहंसः ॥ २ ॥

इति श्रीशुद्धाद्वैतब्रह्मविद्याधिगमप्रकारमीमांसा संपूर्णा ॥



॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥



# परिष्कृतिनिवेदनम् ॥

| पुटः | श्लोकः | पाङ्क्तिः | परिष्कृतम् |
|---|---|---|---|
| ५३ | ३० | १ | विविशुर्य |
| ९५ | १ | ३ | मत्पदपद्मयुग्मविरहं |
| ९६ | ४ | ३ | हृदये |
| १०८ | ३६ | ४ | ....पादपद्मयोर्वाणि |
| ११० | ४५ | २ | सांस्थितिं |
| ११२ | ५२ | ३ | चिकीर्षन्भ्रान्त्वा |
| ११४ | ६० | २ | श्रान्तिमासाद्य |
| ११५ | ६४ | २ | ...कुलराट्तौ |
| ११८ | ७६ | ४ | षट्त्वं |
| १२१ | ८८ | ३ | सौन्दर्ययुत |
| १३९ | १६१ | २ | हृदयकुहरे |
| १६१ | ८२ | १ | वारय |
| १६४ | ९७ | ३ | अरणीसुतनिभकुङ्कुमफाले |
| १६९ | २ | २ | तुण्डाधराधःकृतपक्वबिम्बा |
| १७४ | ६ | ३ | यस्यापाङ्गालोकात् |
| १७५ | ८ | ३ | पठतां |
| २०३ | २८ | २ | विद्यामश्रुतशास्त्रपाठनचणां |

| | | | |
|---|---|---|---|
| २०४ | | | श्रीशंकराचार्यसुवर्णमालास्तवराज |
| २०७ | २ | ३ | रमाधवाङ्घ्रिस्थिरभक्तिदाभ्या |
| २३१ | १० | ३ | गङ्गावारिविनिर्मल |
| २४७ | ५ | ४ | गिरिजाहृदब्जशिशुभा |
| २८५ | २ | १ | बहुशः |
| २९३ | ० | १ | कल्याणानि |
| ३०० | १ | १ | नौमि ह्रीं जपमात्रतुष्टहृदया |
| ३३७ | ३ | १ | कवित्ववाराशिशरन्निशेश |
| ३२९ | ३ | १ | गुणान्यदशमादीनिहामुत्रभोगे |
| ३६१ | १४ | ४ | चिदानन्दरूप |
| ३७५ | १३ | १ | त्वत्पदाब्जयुगलं |
| ४१५ | ११ | १ | नागेन्द्रभोगशयन |
| ४२९ | २१ | ४ | वाञ्छितदातृत्वमवनिजेड्दूत |